सर्वपदार्थविबोधान्तरं सर्वं खल्विदं ब्रह्म इत्येतत् साक्षात् भावेनानुभवति। ततश्चासौ संसार-बन्धनान्मुक्तिमवाप्य अनामयं सच्चिदानन्द-पदं प्रपद्यते।

इत्थं ह्य पुनिषदुपदेशनिष्कर्षोऽयं यदेकमेव तत्त्वमस्ति। तस्मादेव समग्रोऽपि संसारः समुत्पद्यते पुनश्चान्ततस्तत्रैव लीयते। श्रुतिश्चामनतिवाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्। निर्गुण-सगुण भेदेन ब्रह्म द्विविधम्। तत्र निर्गुणं ब्रह्म न वक्तुं शक्यम्। तदस्ति सर्वथैव वागगोचरम् निषेधमुखेनैव तद वर्ण्यते यत् तदिदं न। अत एव श्रुतयो नेतिनेतीत्युक्त्वा तद् गायन्ति। कठोपनिषद् आह—

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महनः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते॥

बृहदारण्यकोपनिषदि याज्ञवल्क्यः तदधिकृत्य गार्गीमित्यमुपदिशतिगार्गि। न तदक्षरं ब्रह्म स्थूलं नाणु न ह्रस्वं न दीर्घम्। तद् असङ्गरसगन्ध-रहितम्।" केनोपनिषत् तन्निष्प्रपञ्चं ब्रह्मवर्णयत्येवम्—

यद् वाचाऽनभ्युदितं येन वागभ्युद्यते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥

मुण्डकोपनिषदेवमुद्गायति तत्—

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति।
यथासतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतहि विश्वम्॥

कस्यचन वस्तुनो बोधाय तल्लक्षणमपेक्ष्यते। लक्षणञ्च तटस्थ-स्वरूप-भेदेन द्विविधं भवति। तटस्थलक्षणेन वस्तुनोऽस्थायिपरिवर्तनशीलगुणा वर्ण्यन्ते। स्वरूप लक्षणेन च वस्तुनः शुद्धं रूप तात्विकञ्च रूपमुपलभ्यते। सगुणब्रह्मण उभयविधं लक्षणं ह्य पनिषत्सु प्राप्यते। स्वरूपलक्षणेन ब्रह्म सत्यं ज्ञानमयं चानन्तरूपमस्ति। उक्तञ्च तैत्तिरीयोपनिषदा—

'सत्यं ज्ञानमनन्तं ब्रह्म'। तच्च ब्रह्म विज्ञानमानन्दञ्चास्ति।

बृहदारण्यकोपनिषदाह—"विज्ञानमानन्दं ब्रह्म"।

उपनिषत्सु ब्रह्मणःस्त्रिस्वाभाविकशक्तीनामुल्लेखः कृतोऽस्ति। श्वेताश्चेतरोपनिषदाह—

'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'।

सगुण ब्रह्मणस्तटस्थलक्षणं छान्दोग्योपनिषदेवं प्रस्तौति—

"तज्जलानीति शान्त उपासीत"।

सगुण ब्रह्म ससारस्यास्य शास्तृ निखिलस्यापि जगतो हि जीवानां भाग्यस्य विधातृं वर्तते। शुभकार्यकर्तॄणां जीवानां तत् कल्याणसम्पादयितृ, मुक्ति-भुक्ति-प्रदातृ, अशुभकर्मकारिप्राणिनिग्रहीतृ च। तदेव सगुणं ब्रह्म ईश्वर-विराट्-हिरण्य-गर्भ संज्ञाया व्यपदिश्यते। अस्य विश्वस्य सर्वेऽपि प्राणिनस्तस्यैव शरीरमिति कथ्यन्ते। सगुणत्वात् तत् पादाभ्यां चलति, हस्ताभ्यां कार्यं करोति, नेत्राभ्यां पश्यति।

उपनिषदां व्यवहारविषयकः पक्षो नितरां मनोऽभिरामः । दार्शनिकानि तत्त्वानि व्यवहारे प्रयुज्योपनिषद् विद्या मानवीय जीवनमतितरां रमयति इत्येतद्धि तदीयं ललितं वैशिष्ट्यम् । उन्नतं समृद्धञ्चाध्यात्मिकपथमारोढुं बहवः सद्गुणाः सत्यपेक्षिताः । अतः उपनिषदो मनोरमाख्यायिकाः निधाय जनसमुदायं तान् सद्गुणान् वरीतुमुपदिशन्ति । आत्मसंयम-तपोदानार्जवाहिंसासत्यादिसद्गुणा जीवनं निःसन्दिग्धतया समुन्नमयन्ति तस्मात् ते उत्तमा गुणा उपनिषद्भिस्तथा आलेखिताः यत् अलोक्यतान्, जन मानसं झटिति तान् स्वीकर्तुमुपक्रमते । तैत्तिरीयोपनिषत् "सत्यं वद, धर्मं चर" इत्यादिना, छान्दोग्योपनिषत् सत्यकामजाबालकथादिभिः, प्रश्नोपनिषद् अनृतनिन्दादिना, मुण्डकोपनिषत् सत्यश्लाघादिना संसारं सन्मार्गं दर्शयन्त्यो हि केन न प्राप्यन्ते ?

उपनिषदो वस्तुतो भारतीयाध्यात्मिकसाहित्यस्य परमभास्वराणि रत्नानि सन्ति । तेषां ह्युपनिषद्रत्नानां दिव्यया हि आभया को न भुवि मतिमान् आवर्जितो नु जातः । शाहजहाँसुतस्य दाराशिकोहस्योपनिषत्प्रेम जगति विदितमेव ।

वैदेशिकानां विपश्चितां समक्षे यदैवायमलौकिको विश्वाभिरामः प्रकाशः समागतस्तदा तत्क्षणमेव ते विद्वांसोऽमुह्यन् । एक्वेटिल डुपेरनो लैटिनभाषायामनूदितवानुपनिषदः । औपनिषत्के साहित्ये श्री जे. डी. लंजुईनासो यत्कार्यं श्रमञ्च चकार तत्स्तुत्यम् । वेबर महोदयस्योद्योगेन तु उपनिषद्ज्ञानस्य प्रचारः समग्रेऽपि पश्चिमेऽभवत् । उपनिषदामनुवादस्तेन जर्मनभाषायां कृतः । अन्ये च पालड्यूसन आर. ई. ह्यूम शोपेनहार-मैक्समूलरप्रभृतिविद्वांसोऽतितरामुपनिषत्सु भक्तिं प्रकटीचक्रुः ।

## 8

## एकं सद्विप्राः बहुधा वदन्ति । (1982)

अथवा

## वैदिकवाङ्मये देवत्वम् । (1983)

वैदिकसाहित्यस्य देवतावादः नूनं विवादास्पदः । विषयेऽस्मिन् विभिन्नैः विचारकैः निजविचारजातानि प्रकटीकृतानि । केचिद्शौनकमतमङ्गीकृत्य देवतानाम् एकत्वं प्रतिपादयन्ति, इतरे तु आकार चिन्तने भेद दर्शनात् तासां बहुत्वमित्यपि वदन्ति । यास्कस्तु दैवतकाण्डे देवतानामाकार चिन्तनमादाय उक्तवान् यत् पुरुषविधा अपि देवता भवति ।

तत्र मुख्यायाः प्रतिपाद्याया देवतायाः किं स्वरूपमिति विचारे एकैव देवताऽऽत्मस्वरूपिणी वेद प्रतिपाद्या । तस्या एकस्या एवोपाधिभेदाद् भिन्नत्वम्, भिन्नताया नाना शब्दैराकारैर्वचनमित्यध्यात्मवादिनः ।

सम्प्रतिपद्यान्ये ब्रुवते—सत्यमेकैव देवता प्रतिपाद्यते, सत्यमेव चैकस्यास्तस्या उपाधिभेदेन भिन्नत्वम्, तत्प्रतिपादनार्थमपेक्षितोपाधेराश्रयणे शब्दद्वारक एव सर्वत्र

वाङ्‌भयेऽर्थे प्रत्यय इति प्रथमोपस्थितं शब्दमेवोपाधितयाऽऽश्रित्य तद्भेदेन देवताया भन्नत्वम् । अत एवेन्द्रचन्द्रादीनां नानाशब्दानामुपाधित्वेन नानादेवता वेदे प्रतिपाद्यन्ते । अत एव शब्दानां नित्यतया तदुपाधिकदेवानमपि नित्यत्वेन नित्यार्थप्रतिपादको वेद इति भवति । परिच्छिन्नार्थोपाधिग्रहणे सम्भवतां दोषाणामत्र कल्पेऽप्राप्तिः । न हि एकोऽर्थविशेषरूप-इन्द्ररूपो देवो युगपन्नाना देशेष्वनुष्ठीयमानेषु समानेषु यागेषु युगोपद्दत्वेन सम्बन्धभर्हति ।

माहात्म्यात्तत्कल्पनापेक्षया नित्यस्य विभोः शब्दस्यैव उपाधित्वेनाश्रयणे नित्यस्य विभोरपि शब्दस्य शैवालत्रोटनन्यायेन अभिव्यञ्जक-कण्ठताल्वाद्यभि घातरूप-प्रयत्नस्य तत्र तत्र भिन्नतया तद्वशतोऽभिव्यज्यमानस्य नित्यस्य विभोः शब्दस्य तद्नूपिष्या देवतायाश्च युगपत्सर्वदेशसम्बन्धे न किञ्चिद्बाधकमिति मीमांसकाः ।

अर्थबोधे प्राथम्येन शब्दप्राप्तावपि बोधरूपफले अर्थस्यैव सन्निकृष्टत्वं बोधक-शब्दस्य त्वर्थद्वारेत्यर्थस्यैवोपाधित्वम् ग्रहीतुमुचितम् । एवञ्चार्थरूपमुपाधि गृहीत्वा देवतातत्व निश्चयः । अर्थश्च नित्यो लोकरूपः लोकिनस्तु तत्र सम्बध्यन्ते इति लोक-स्यैवाधाररूपस्योपाधित्वेन ग्रहणम् । यद्यपि लोकोऽपि अविशेष भावेन ब्रह्माण्डात्मैक एव तथापि तत्र सविधवर्तित्व-विदूरवर्तित्ववशतो भेद कल्पनम् । ते च लोकास्मित्रिधा भूलोकान्तरिक्षलोकद्योलोकरूपतः । तदुपाधिवशतो वेदप्रतिपाद्या देवतास्त्रिविधा इति नैरुक्ताः ।

तदुक्तं यास्केन-तिस्त्रो देवता इति नैरुक्ता इति । ताश्चेमा अग्निवाय्वादित्य शब्दैरुच्यन्ते देवताः । एवं सति प्रतिपाद्यानां देवतानां भूलोकसम्बन्धित्वेऽग्नित्वम्, अन्तरिक्षलोकसम्बन्धित्वे वायुत्वम्, द्योलोकसम्बन्धित्वे आदित्यत्वमिति तत्प्रति-पादनं वेदे ।

ऋग्वेदीयानुक्रमणिकाकारेण शौनकेन तु पूर्वक्तान् पक्षान् प्रदर्श्य पूर्वाचार्या-णामभिमतः पक्षः प्रदर्श्यते । तत्र सत्यमेवाध्यात्मवाद एव वेदे । आत्मैव च वेदप्रति-पाद्यः । आत्मनश्चैक्येन भेदरादित्येन प्रतिपादनस्याशक्यतयोपाद्याश्रमणे विश्वजिन्न्यायेन सर्वसम्मतः प्राथमिकदृश्यविकाररूप आदित्य एवोपाधित्वेन ग्रहीतव्यः । तदुपाधित्वेनैव वेदे आत्मनः प्रतिपादनम् । अध्यात्मवाद एवासौ । तत्र शरीस्थानीयमादित्यरूपमुपाधिं गृहीत्वा वेदे प्रतिपादनमिति आदित्यरूपिण एवात्मनो वेदे प्रतिपादनम् । तदुक्तं तेन— "एक एव वा महानात्मा वेदे स्तूयते, स सूर्य इत्याचक्षते । सूर्य आत्मा जगतस्तस्थुष-श्चेत्यपि निगमो भवती" ति ।

आदित्य एवैको देवो वेदे प्रतिपाद्य इति वचने इन्द्र-वरुण-मित्र-प्रभृतयो भिन्नैर्ना-मभिः प्रतिपाद्या अपि निमित्त-विशेषवशतः आदित्यभिन्नाः । आदित्यस्यैव तानि नामा-न्तराणि । आदित्य एवेन्द्रादिशब्दैः प्रतिपाद्यत इति भावः ।

वेदो मन्त्रब्राह्मणोभयात्मक इति मन्त्रभाग इव ब्राह्मणभागेऽपि आदित्यस्य प्रतिपादनम् । एवं सति ब्राह्मणगतानि कर्माणि आदित्यस्यैव अर्थवादा अपि तत्प्रति-पादका एव । एवं सति अर्थवाद विषये 'नित्यं कञ्चनार्थं गृहीत्वोपपत्तिर्वक्तव्ये' ति

(शा०भा० 1:2:10) शबरवचनमप्युपपद्यते । आदित्यकर्मानुकारेण मनुष्यैरनुष्ठीयमानानि कर्माणि भवन्ति । एवं सति देवताकृतिमनु मनुष्यैः कर्मानुष्ठानमिति ब्राह्मणे तत्र तत्र प्रतिपाद्यमानमुपपद्यते यथा हि मन्त्रः—

इन्द्रं मित्रं वरुणमग्निमाहु-
रथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं
यमं मातरिश्वानमाहु रिति ॥ (ऋग्वेद 1:164:86)

## 9

## षड्दर्शनानां संक्षिप्तपरिचयः ।

अथवा

## भारतीयदर्शनेषु जगन्मिथ्यात्वम् । (1984)

प्रो० मैक्समूलरमहोदयानुसारं—"विभिन्नमतानि परस्परालोचन-पराण्यपि भारतीयदर्शनानि सामान्यतः समानलक्ष्याणि, भिन्नमुण्डसाधितान्यपि एकमत्यभूत्तीनि सन्ति, आत्मनः स्वरूपं प्रतिपादयन्ति, आत्मनः परब्रह्मणा सह सम्बन्धं दर्शयितुं स्थापयितुं च यतन्ते"। दर्शनं परब्रह्मस्वरूपसाधनं प्रस्तूय तज्ज्ञानेन च परमानन्दप्राप्तिपन्थानमुपदिशति । इदं धर्मपरकाण्यपि वैदिकबहुदेवतावादमतिशय्य परब्रह्मण्येव केवलं विश्वसन्ति । एतस्मिन्नेवार्थे तेषामास्तिक त्वाभिधानमन्यथा तथाकथितं निरीश्वरं प्रकृतिपुरुषात्मकं सांख्यदर्शनं नास्तिककोटिमभ्युपेयात् ।

श्रीजैमिनि-बादरायण-कपिल-पतञ्जलि-गोतम-कणादप्रणीतानि क्रमशः पूर्वमीमांसा-उत्तरमीमांसा-सांख्ययोग-न्याय-वैशेषिकाभिधानानि षड् दर्शनाति सन्ति ।

एषां कालकमनिश्चयो विवादास्पदः। नात्र विदुषामैकमत्यम्। तथापि खीष्टब्दात् प्राक् 600–300 शताब्दीषु सूत्रसाहित्यकाले एव एषामुद्भवविकासायित्यत्र प्रायो नास्ति वैमत्यत् । वैदिकनासदीयसूक्तादिषूपनिषत्सु च दर्शनबीज स्फुट मेव, परं निश्चितषड्दर्शनान्युपनिषदुत्तरकालीन्येव ।

### 1. पूर्वमीमांसा :

पूर्वमीमांसादर्शनवर्गस्य प्रवर्तकः मुनिर्जैमिनिः वर्तते । 'मीमांसासूत्रं' प्रमुखःग्रन्थो विद्यते । द्वादशाध्यायात्मकेऽस्मिन् शास्त्रे जैमिनिः वैदिकयज्ञानुष्ठान दिकर्मकाण्डसम्बन्धिनियमान् विवृण्वन्, विध्यर्थवाद-मन्त्र स्मृतिनामधेयार्थान् स्पष्टयन् प्रत्यक्षानुमानोपमानार्थापत्तिशब्दात्मकानि पञ्च (कुमारिलभट्टानुसारमयं संहितानि षट्) माणानि ज्ञानोपलब्धये समुपस्थापयन्, धर्मसाधनाय स्वमतं प्रस्तोतुं विषय-समस्या-पूर्वपक्षसिद्धान्त संगीतीति पञ्चधा स्वार्थं साधयति । एवं विधि-फलेऽभिधाय जनमनासि तत्र

प्रवर्तयत् दर्शनमिदं संसारसागरमज्जनदुःखबन्धमोक्षोपायं परमानन्दहेतुकमिति । अत्र उपवर्ष-शबर-स्वामिप्रभाकर कुमारिलमण्डनमिश्र वाचस्पतिप्रमुखाः व्याख्यातारः ।

**2. उत्तरमीमांसा :**

'ब्रह्म सत्यं जगन्मिथ्या', 'एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चिन्', 'अयमात्मा ब्रह्म', 'नैवात्र किञ्चित्प्राप्तियोग्यं', 'सुखाधायकं', 'ज्ञानार्ह वाऋतेः ब्रह्मणः', 'ब्रह्मज्ञानी ब्रह्मैव भवति' इत्येवं वेदान्तिनां सिद्धान्तः । ब्रह्मजिज्ञासैव लक्ष्यम् । तत (ब्रह्म) त्वम् (आत्मा) असीति ज्ञानोपलब्धिः । सलिले लवणवत् शरीरे ब्रह्मणः स्थितिस्तत्साक्षात्कार एव मोक्षः । शंकराचार्यस्याद्वैतवादः संसारमिमं मायात्मकं मन्यते । मृत्तिकाभाण्डानि यथा निर्मीयन्ते त्रुट्यन्ति च परं मृत्तिका मृतिकैव तथैव जगदिदं मायैव । ब्रह्मैव केवलं सत्यम् । तत्र लय एव लक्ष्यमिति शाङ्कराणां मतम् । सन्दर्भेऽस्मिन् शंकराचार्येण एकस्मिन् श्लोकैव स्वमतमुद्घोषितम्—

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।

ब्रह्मसत्यं जगन्मिथ्या ब्रह्मजीवैव नापरः ॥

मन्त्रब्राह्मणात्मको वेदराशिः कर्मकाण्डम्, उपनिषश्च ज्ञानकाण्डमिति भेदमुपपादयन् बादरायणः, ज्ञाने सति कर्मकाण्डस्यानुपादेयतामुपदर्शयति । गौडपदीयकारिकायां मायावादो विशेषेण प्रपञ्चितः । वाचस्पतिमिश्रस्य भामती बादरायणसूत्राणि व्याख्याति । रामानुजस्य श्रीभाष्ये विशिष्टाद्वैतवादश्शकंखादाद्भिन्नः । तदनुसारं जगत्सत्यम्, ईश्वरब्रह्मोरभेदः, अन्ते चात्मनः परब्रह्मणि लयः । आनन्दतीर्थस्य द्वैतवादः ब्रह्म-जीव-मायाभेदं प्रतिपाद यति । बल्लभाचार्यः शुद्धाद्वैववादं प्रस्तुवन् स्वीये 'अणुभाष्ये' मायाहीनं ब्रह्मेति मनुते ।

**3. सांख्यम् :**

शास्त्रमिदं पञ्चविंशति तत्त्वानि व्याचष्टे । तद् यथा—अव्यक्त प्रकृतिः, अष्टधा-बुद्धिः, वैकारिक तैजस-भूतादित्रिविधोऽहंकारः, शब्द-स्पर्श-रूपं-रसं-गन्धात्मका पञ्चतन्मात्रा, ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च, मनः, पञ्चभूतानि पुरुषश्च । गुणत्रय (सत्वं रजस्तमः) विवेचनं सांख्यशास्त्रस्य मुख्या विशेषता । विषयश्च प्रकृति-पुरुषयोः व्याख्यानम् । वेदान्तिनां मते पुरुषः एक एव, सांख्यशास्त्रिणां मते तु अनेकै पुरुषाः । तथाहि यद्येक एव पुरुषाः स्यात्, तर्हि एकस्मिन् पुरुषे दुष्टे सज्जने वा, सुखिनि दुःखिनि वा सर्वेऽपि दृश्यमानाः पुरुषाः दुष्टाः सज्जनाः वा सुखिनो दुःखिनो वा स्युः, परं न तादृशं किञ्चिद् दृश्यते जगति । शास्त्रस्यास्य लक्ष्यं दुःखनिष्कृतिः । शरीराहंकारादिभ्यः पुरुषः भिन्न एव । तस्य ज्ञानेनैव दुःखमपैति । एवं ज्ञायते यत् पूर्वोक्तं वेदान्तदर्शनमद्वैतवादात्मकं सांख्यञ्च द्वैतवादात्मकम्, प्रकृतिपुरुषतोः द्वयोरपि सत्यत्वात् । प्रकृतिः जडाव्यक्तरूपा च वर्तते, सा पुरुषसंयोगमुपेत्यैव विकासमातनोति । पुरुषवत् साप्यनन्तादिरहिता चास्ति । पुरुषेण दृष्टा सा खलु पूर्वोक्तबुद्धयादिविवधि-पदार्थरूपतामभिव्यनक्ति वेदान्तिनां मतेऽविद्याकारणोऽयं संसारः । सांख्यवादिनां मते तु

प्रकृतिपुरुषसंयोग एव कारणम् । संयोगश्चाविवेककारणात् भवति । विवेके सति च पुरुषः पुनरपि स्वतन्त्रः, सानन्दः, आत्मपूर्णश्च सम्पद्यते ।

चित्रालये यथा रङ्गमञ्चोपरि विविधभावभङ्गिमायुक्तां नृत्यन्तीं नर्तकीं कश्चित् दर्शकः पश्यति तद्गतञ्चानुभवति, तद्वत् पुरुषोऽपि समोहं निरीक्षते प्रकृतिम् । नर्तकी दर्शककृत एव नृत्यति नृत्यान्ते च सर्वं पूर्वज्जायते । तथैवास्ति स्थिति पुरुषस्य प्रकृत्या सह संयोगे । प्रकृतिः नर्तकीय एकस्यानन्तरमन्यं जनं सम्मोहयितुं कामयते । परमन्ततः पुरुषः स्वातन्त्र्यं लभन्त एव ।

साँख्यशास्त्रं व्यक्तिगतदुःखापेक्षया जगद्दुःख विविनक्ति । दुःखं प्रकृतेरेवास्ते, न पुरुषस्य । प्रकृतिः पुरुषं सेवमाना तदुपकारायैव चेष्टते । दृश्यतां गते च विरतिमेति । पुरुषस्तु स्वतन्त्र एव सदा सर्वदा । केवलं प्रकृतिरेव भिन्नभिन्नपुरुषनिर्भरा सती अनेकजन्मस्वाविला भूत्वान्ते स्वतन्त्रा भवति । 60 तमकारिकायां स्पष्टमिदं यत्—उदात्तप्रकृतिका प्रकृतिः कृतघ्नस्य पुरुषस्योपकारायैव यतमाना न किञ्चिदीप तस्मादपेक्षते । विषयेऽस्मिन् ईश्वरकृष्णस्य सांख्यकारिका, वार्षगण्यस्य षष्ठीतन्त्रं वाचस्पतिश्रस्य सांख्यतत्त्वकौमुदीति मुख्याः ग्रन्थाः ।

**4. योगदर्शनम् :**

श्रीमद्भगवद्गीतानुसारं 'समत्वं योग', 'योगः कर्मसु कौशलम्', 'युज्यते' वेति व्युत्पत्त्या शारीरिक-मानसिक-क्रियाकलापानामेकस्मिन् वस्तुनि 'निदिध्यासन' मुद्योग एव इत्यर्थे, सम्प्रज्ञातासम्प्रज्ञातभेदद्वयात्मक—

'योगश्चित्तवृत्तिनिरोधः'

इत्यभ्यधायि मुनिना । महर्षिः पतञ्जलिः कापिलनयसिद्धान् पञ्चविंशतिपदार्थानभ्युपगम्यैव तदिपमपीश्वराख्यं तत्त्वमभ्युपजगाम । पाद चतुष्टयात्मके योगशास्त्रे सः ।

(1) समाधिपादे चित्तवृत्तिनिरोधात्मकं योगः ।

(2) साधनपादे तद्योगसिद्धये तप स्वाध्यायेश्वर प्रणिधानादीनियम-नियमासन प्राणायाम प्रत्याहार धारणाध्यानसमाधिरूपाणि योगाङ्गानि ।

(3) विभूतिपादे तज्जन्यैश्वर्यालौकिकशक्तीः ।

(4) कैवल्यपादे च तच्छक्तिलालसानिरोधपूर्वकं परमानन्दमुपदिदेश ।

सांख्यदर्शनस्य याथार्थ्येऽपि मानसिकशारीरिकक्रियाकलापस्य विरोधोपायाभावे, स्वातन्त्र्यमुपगतेऽपि पुरुषे, पुनरपि इन्द्रियविकारसम्भावनाकारणानपूर्णमेव तच्छास्त्रमिति योगशास्त्रे यौगिकक्रियाः समुपदिष्टाः । कस्मिंश्चित्तत्वे मनो निधाय तत्त्वान्तरान्मनो निवर्तयन् जनः सफलतामधिगच्छति । अन्यथा 'चेतश्चञ्चलामिति' समाधिमेवाकलयितुं न स प्रभवति । 'प्रणव' नाम्नाभिहित 'ईश्वर' न केनचिदर्थेन संबध्नाति । एवं योगसाधनायाभ्युपगतोऽपीश्वरः न सृष्टिकर्तृतया प्रयोजनवानिति सिद्धम् । चित्तवृत्तिनिरोधे सम्पन्ने तु सर्वं सम्पन्नं भवति । अत्र व्यासवाचस्पतिमिश्र-विज्ञानभिक्षु-भोजप्रणीतानि भाष्याणि प्रामुख्येन परिगणितानि ।

**5. न्यायदर्शनम् :**

पूर्वोक्तदर्शनानामपेक्षया न्याय-वैशेषिकद्वयमतितरां पाण्डित्यपूर्णं शुष्कप्रायञ्च । प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभास-छलजातिनिग्रहस्थानाभिधानाः षोडशदार्थाः साधत्वेनाभ्युपगताः निःश्रयसे । अहकारेच्छाद्यपनोदेन मिथ्याज्ञाननाशपूर्वकं सत्यप्रतिष्ठा खलु दर्शनानां लक्ष्यं, विशेषतः नैयायिकानाम् । एषां मते जीवात्मपरमात्मभेदेन द्विविध आत्मा परमात्मैव चास्मत्कर्मप्रदाता । बौद्धानां शून्यवादं खण्डयितुमस्ति गौतमस्य तर्कः—न बीजेन विना वृक्षोत्पपत्तिस्तथैवेश्वरेण विनां कथं सृष्टिः संभवति । शून्यात् सृष्टिरसंभवा । अतः ईश्वर एव जगद्धेतुः ।

भिन्नदार्शनिकानां भिन्नानि सन्ति प्रमाणानि – यथा प्रत्यक्षं चार्वाकाणां, प्रत्यक्षानुमाने वैशेषिकबौद्धानाम्, प्रत्यक्षानुमानशब्दाः सांख्यमतानुयायिनां, प्रत्यानुमानोपमानशब्दाः न्यायविदां, प्रत्यक्षानुमानोपमानार्थपत्तिशब्दाः प्रभाकर मीमांसकस्य, प्रत्यक्षानुमानोपमानार्थापत्तिशब्दाभावाः मीमांसकानामिति । पूणसत्योपलब्धिः प्रमा गोतमस्य ज्ञानलक्ष्यम् । तदर्थमेव प्रमाणप्रमेयादिपदार्थानां व्युत्पत्तिः । पक्षिलस्वामि-उद्योतकर-दिङ्गनाग धर्मकीर्तिप्रमुखाः भाष्यकाराः सन्ति ।

**6. वैशेषिकम् :**

दर्शनमिद न्यायात् किञ्चिदेवभिद्यते । वैशेषिकशास्त्रिणामणुमपि न्यायविदो जानन्ति । तथापि विशेषविकासत्वात् भिन्ननामतश्च शास्त्रमिदं पृथक् परिगण्यते । शास्त्रेऽस्मिन् षण्णामेव पदार्थानां स्वीकारः । केषाञ्चिन्मते सप्त वा नव वा पदार्थाः । ते च द्रव्यगुण-कर्म-सामान्य-विशेष-समवाय-अभावरूपाः । सर्वमन्यदन्तर्गतमेवैषाम् । अत्रेत्थं विचार्यते—अणुरूपाः पदार्थाः नित्याः, विकसितरूपाश्चानित्याः । अणोर्नास्ति नाशः । सर्वनाशे जातेऽपि अणोः स्थितिः कुत्राप्यस्त्येव ।

## 10
## कर्मण्येवाधिकारस्ते मा फलेषु कदाचन
## (कर्मवादः)

श्रीमद्भगवद्गीता 'महाभारतम्' इत्येतेन नामधेयेन सुप्रथितस्य विशालकलेवरस्य महाग्रन्थस्य सारतमोंऽशः । सा श्लोकानां सप्तशतया निःश्रेयसाधिगमनस्योपायान् सुबोधायां भाषायामभिव्यनक्ति । तदीया वस्तुकथनप्रणाली सरलास्ति तस्मात् सामान्य ज्ञानसम्पन्नोऽपि जनोऽन्तरेणाधिकमायासं तामवबोधमर्हति किञ्च सकलमपि प्रपञ्च-परिच्छदमुपेक्ष्यानेन गीताराजमार्गेण स्वकीयं प्राप्तव्यमास्पदमासादयतुं शक्नोति ।

गीताया उद्देशः–स्वर्गो मुक्तिर्वा इत्येक संशयः गीता वेदविरोधिनी नो वा इति द्वितीयः संशयः । गीताया विषयः कर्म, ज्ञानं वा इति तृतीय संशयः ।

यदि गीताया उद्देश्यः स्वर्गः, तर्हि सा 'स्वर्गपराः' (2–43), 'क्षीणेपुण्ये मर्त्य-लोकं विशन्ति' (9–21), 'यद् गत्वा न निवर्तन्ते तद्धाम परमं मम' (15–6) इति स्वर्ग कथमधिक्षिपति ? यदि गीताया उद्देश्यं मुक्तिरीति, तत् सा कर्मणि कथं प्रवर्त्तयति ? कर्मणा तु स्वर्गो नरको वा प्राप्यते न मुक्तिः । मुक्तिस्तु कर्मात्यन्ताभावेन भवति, ज्ञानेन वा । परमिद कर्मयोगशास्त्रं कथं ज्ञानं दापयेत् ? इतश्च मुक्त्युद्देश्यवती गीता 'हतो वा प्राप्स्यसि सर्गं' (2–37) इति स्वर्गमात्रदायकं युद्धाय अर्जुनं कुतो नाम प्रोत्साहयति ?

यदि गीताया विषयः कर्म्म, ततो गीतया मुक्तिः कथं प्राप्येत्, न हि कर्म्मणा मुक्तिर्भवति किन्तुज्ञानेन । कथं च सा 'कर्म्मणैव हि संसिद्धिमास्थिरता जनकादयः' (3–20) इत्यादौ जनकादीनां कर्मणा मुक्ति संकेतयति 'सिद्धि' शब्देन । यदि गीताया विषयो ज्ञानम्, तर्हि इदं कर्मयोगशास्त्रं कथं व्यपदिश्यते ? अर्जुनश्च कथमेतच्छ्रुत्वा युद्धकर्मणि प्रवृत्तः ?

एवं बहुविधाः प्रश्ना गीताविषये, उपतिष्ठन्ते । यदि एतेषां सर्वेषां सर्वाङ्गीण-समाधानाय प्रयतयेत; तर्हि स्वतन्त्र एको ग्रन्थः सज्जीभवेत् । परं तथावकाशो नास्त्यत्र एतद्विषये 'कर्मण्यवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूर्मा ते सङ्गोस्त्व-कर्मणि' (2।47) इति पद्यमंशत उक्तप्रश्नानामुत्तरं प्रददाति । एतेन पद्येन सिध्यति यद् गीताया उद्देश्यं मुक्तिः, गीता वेद विरोधिनी, वेदोक्तकर्मकाण्डविरोधिनी, वेदोक्त-यज्ञविरोधिनी वा नास्ति, किन्तु तत्फलापसारिकैव केवलम् । गीताया विषयः कर्म ज्ञानं च । सा ज्ञानयुक्तकर्मणा मुक्तिमुद्दिशति । गीताया वैदिकयज्ञा इष्टाः, परं कामनावर्जमेव ।

एतत् सत्यं यद् मोक्ष एव सर्वेषां मते परमपुरुषार्थः, स्वर्ग कस्यापि कृते परम-पुरुषार्थो न भवितुमर्हति । एव गीतामतेऽपि मोक्ष एव परमपुरुषार्थः । यद्येवम्; तद् गीता कर्मार्थं कथं प्रोत्साहयति ? तत्रेदं ज्ञेयं यद्-यद्यपि कर्मणोऽत्यन्ताभावेनैन मुक्तिर्जायते; गीतातः प्राक् च तुरीयाश्रमे कर्मसंन्यासेनैव ज्ञानेन च मुक्तिप्राप्तिर्मन्यते-स्म; तथापि गीतया मुक्त्यर्थं सुन्दरतर उपाय उद्भावितः । तद्दिशागृहस्थोऽपि कर्मकर्त्ता वा संन्यासी भवितुमर्हति; मोक्षमधिगन्तुमर्हति । तदीय उपायोऽयमुद्भावितो गीताया यद्जनस्य कर्मण्येवाधिकारो न फले । अत एव स कर्मफलहेतुर्माभूत् । अकर्मापि च मा भूत् । एवं कर्मफले त्यक्ते सति जातमपि तत् कर्म अकर्मैव भवति 'कर्मण्यकर्म यः पश्येद् अकर्मणि च कर्म यः (4–18) इति दिशा ज्ञानरूपं च तद् अकर्म मोक्षदायकं भवति । अथवा कर्मसिद्धतायां जातायां तदा स्वयमेव ज्ञानमुत्पद्यते, यथा च 'तत्-ज्ञानं स्वयं (कर्म) योगसंसिद्धः कालेनात्मनि विन्दति (4–38), ज्ञानेन च मुक्तिर्भवति 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् सर्वाणि कर्माणि किमपि फल-मुद्दिश्यैव क्रियन्ते । परं गीता प्रदर्शयति यत्-फलोद्देश्येन क्रियमाणं कर्म बन्धनजनकं भवति; अथवा पातकं भवति, मुक्तिदायकं न भवति; प्रत्युत फलाशायां सत्यां बाह्य-दृष्टौ अकर्मापि कर्मैव भवति ।

एतदुक्तं भवति—वेदे यानि कर्मफलानि प्रोक्तानि; तानि प्ररोचनार्थानि, कर्मणिप्रवर्तनार्थं सन्ति; न तत्प्राप्त्याकांक्षोत्पादनार्थम् । यथा च श्रीमद्भागवते प्रोक्तम्—

वेदोक्तमेव कुर्वाणो निस्सङ्गोऽपि तमीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं राचनार्था फलश्रुतिः ।। (11/3/46)

परम ज्ञानिनो बाला इव जनास्तत्रत्यां प्ररोचनां कर्मप्रवर्तनसाधनभूतां न मत्वा तस्यां प्ररोचनायामेव निरता जायन्ते । तदीयं दुष्फलमिदं भवित यत् तत्र कर्मकरणं मुख्यं न तिष्ठति, किन्तु तत्र तदीयफलमेव अक्ष्णोरग्रे उद्देशरूपेण नरीनृत्यते । ततः कर्मवैगुण्येन वा फलविचारेण वा बन्धनं स्वाभाविकमेव ।

कश्चिज्जनोऽन्नपाकं कुर्वन् मनसि तदास्वादतत्फलप्रवणस्तच्चिन्तनपरस्तद्हृत-चित्तो भवेत् । तदीयं किं फलं जायेत ? एतदेव यद् अन्नपाके त्रुटिर्जायते । तद् अपक्वं वा तिष्ठति, ज्वलितं वा जायते, येन तत्फलमपि पूर्णतया न प्राप्यते । प्रत्युत तद् रोगजनकं भूत्वा बन्धनदायकं भवति । एवं रोगापनयनार्थं कटुकौषधाज्ञायां तदनुस्यूत-सितामात्रास्वादनप्रवणः कटुकौषधोपशमनीय रोगं तत्कटुकौषधपाने त्रुटिं कृत्वा वर्धयितुमेवेच्छत्यज्ञानी । बन्धनाद् मोक्तुं तामेव फलकामनां गीता तित्याजयिषति, न तु वैदिकयज्ञादिकर्म इति सूक्ष्मतत्त्वविदो विदुः, न खलु आपातदर्शिनो जनाः । तत एव तु प्रोक्तम्—कर्मण्यवाधिकारस्ते मा फलेषु कदाचन ।

एवं भगवान् कर्म न तित्याजयिषति, किन्तु तत्फलम् । एवं सति तत् कर्मापि अकर्मैव भवति भगवान् वृश्चिकं न जिघांसति, किन्तु तदनुस्यूतं दंशकंटकमेव अपजि-हीर्षति । एवं दंशे अपहृते सति स वृश्चिकोऽपि वृश्चिको न तिष्ठति । वृश्चिकस्य वृश्चिकत्वं तद्दंशे एवास्ति; न तत्स्वरूपे । एवं सति फलत्यागोपेतेन कर्मणा वस्तुतश्च अकर्मणा इत्यादौ भगवता पिशुनिता । तदेव भगवान् वैदिकयज्ञादीनि न निराचिकीर्षति, किन्तु तत्फलकामनामेव'। 'यामिमां पुष्पितां वाचम्' इत्यादौ 'स्वर्गपरा' इत्यादि लिङ्गात् कामनादूरीकारोऽनासक्तिरेव च भगवत इष्टा न वैदिककर्मदूरीकारः ।

एवं 'निस्त्रैगुण्यो भवार्जुन' इत्यादावपि गुणत्रयस्य कार्यरूपेषु ऐहिकामुष्मिक-समस्तभोगेषु तथा तत्साधनभूतसमस्तकर्मसु ममतासक्तिकामनादेरुच्छेद एव निस्त्रैगुण्य-भावः । अत्र स्वरूपतः समस्तकर्मणां त्यागो न नाम भगवतो मते निस्त्रैगुण्यम्, यतो हि स्वरूपेण समस्तकर्माणि समस्तविषयाँश्च कोऽपि जनो न जातु हातुमीष्टे (3/5), कर्ममात्रं च त्रिगुणमूलकम् तद् गुणातीतताऽभावात् किं भगवतो मते कर्म्ममात्रं त्याज्यं स्यात् ? यद्येवम्; तर्हि गीतायाः 'कर्मयोगशास्त्रम्' इति नाम कुतः ? यदि कर्म न त्याज्यं त्रिगुणात्मकमपि; किन्तु तत्फलमात्रम्, यथा च—"त्यक्त्वा कर्मफलासंगं नित्य-तृप्तो निराश्रयः । कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः (4–20) इति तदेवं वैदिकज्ञादिकर्मापि भगवतेष्यते न त्याज्यतामापतति; किन्तु तत्फलमात्रम् ।

किञ्च-इदं शरीरमपि तु त्रिगुणस्य कार्यम् (18–40) तत् शरीरस्यापि त्यागं गीता कथं नोपदिशति ? प्रत्युत् स्वशरीरोपघातरूपात्महत्या पापप्रदा प्रोक्ता ।

परं निष्कामतत्कर्म तु आचरणीयमेव प्रोक्तम्। एवं त्रैगुण्यवैदिककर्मणामुतघातो पापम्; परं निष्कामतदाचरणं तु कर्त्तव्यमेव सर्वेषामधिकारिणाम्। अत एव शरीरेण तदद्वारा च क्रियमाणेषु कर्मसु तत्फलरूपसमस्तभोगेषु अहंता ममतासक्तिकामनादिराहितीभाव एवात्र निस्त्रैगुण्यं विवक्षितम् अर्थात् त्रयाणां गुणानां कार्यात् कर्मफलादे राहित्यमभिप्रेतमत्र, न तु वेदप्रोक्तकर्मतो राहित्यमिति। एतेन 'येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम्' इत्यादि गीताश्लोका अपि व्याख्याता एव।

अयमाशयः—देवा भगवतो विशिष्टाङ्गानि मन्यन्ते तद् अङ्गिनः पूजा अङ्गैर्विना कदापि न भवति। यदि अंगस्य अंगानां वा पूजा केवलमंगपूजा मन्येत; तत्पूजनेन केवलमङ्गस्य तृप्तिरभिप्रेयेत; न खल्वङ्गिनः, तत् सा केवलांगपूजा गीतामते अवश्यमेव अविधिपूर्विका। परन्तु यदि अङ्गपूजा अंगिनः पूजार्थं निमित्तमात्रं मन्येत; तत्र लक्ष्यमगिपूजास्याद्, अंगिप्रसादः स्यात् नाङ्गप्रसादः; एवमभेदो मन्येत; तत्पूजने च फलाकांक्षां न विधीयेत; तदा गीतामते तत्पूजनमविधिपूर्वकं न भवति; अज्ञानपूर्वकं न भवति।

फलतः वैदिकदेवपूजापि यदि परमात्मनोऽभेदबुद्ध्या क्रियेत, कर्मफलं चाऽनुद्दिश्य क्रियेत; सापि गीतासम्मता मुक्तिप्रदात्री च। फले उद्दिष्टे तु सैव स्वर्गादिबन्धनदात्री। एवं गीतास्थो यज्ञशब्दो वैदिककर्मपर एव। केवलं गीतामतेन ततः फलसम्बन्धस्त्याज्यः। यथा भगवता 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' (2–37) इति युद्धस्य फलं परत्र स्वर्गसुखभोगः, इहच राज्योपभोगो दर्शितः, तथापि कामोपभोगत्याजको भगवान् अर्जुनं तद्युद्धतो नापसिसारयिषति; किन्तु 'तत्फलमनभिसन्धायैव त्वं युध्यस्व' इति तत्र भगवतोऽभिप्रायः, तथैव वैदिकदेवयज्ञस्यापि फल परत्र स्वर्गः (9–20) इहलोके च इष्टभोगप्राप्तिरभिहिता (3–18); तथापि भगवतो न तन्निषेध इष्टः; किन्तु पूर्ववत् तदीयमिदमेवाभिप्रेतं तत् त्वं फलाकांक्षां मनसि न निधाय, तत्फलं मयि वा आधाय, तत्फलेन स्वकीयं सम्बन्धं विच्छिद्यदेवयज्ञान् कुरु। एवं ते सीमितं स्वर्गादिफलं बन्धनं वा न स्यात्, किन्तु असीमितं मुक्तिफलं स्यात्। 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य न (कर्मफल) सन्यासिनां क्वचित्।' तत् स्पष्टं यद्-गीता वृश्चिकं न जिघांसति; किन्तु वृश्चिकदशकण्टकमेव दूरीचिकीर्षति युद्धमपि वैदिककर्मकाण्डवत् सकामत्वेन स्वर्गादिभोगरूपबन्धपीड़ादायकत्वाद् वृश्चिकरूपम्। गीता तद् वृश्चिकात्मकं युद्धं नापसिसारयिषति, किन्तु तद्दंशकण्टकरूपं तत्फलमेव। तथासति युद्धं युद्धं न तिष्ठति। ततः स्वर्गो न तत्फलं भवति अकर्मत्वाद् मुक्तिरेव। एवं वैदिकयज्ञविषये वैदिकदेवपूजादिकर्मविषयेऽपि संघटनीयो भगवदाशयः।

प्राग् वैदिककर्मभिः स्वर्गप्राप्तिर्मन्यते स्मः अकर्मणा ज्ञानेन वा मुक्तिर्मन्यते स्मः, परं भगवता तत्र सुधारः कृतो यद् वैदिककर्मणापि मुक्तिः प्राप्यते। तत्र केवलं तत्कर्मफलभोगासक्तिस्त्याज्या। तदैव यत्र तत्र प्रोक्तं यत् कर्म तु कुरु; परं तत्फलाकाक्षां

त्यज । तदेव बोधयति—"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" (2-86) इति पद्यम् ।

अदसीयोऽर्थोऽयं यत्-- तव अथवा सर्वस्यापि जनस्य कर्मण्येव अधिकारोऽस्ति; यतः कर्म कर्तुं शक्तो भवति सः । तत्फलेषु तस्याधिकारोऽस्ति; यतः कर्म कर्तुं शक्तो भवति सः । तत्फलेषु तस्याधिकारो नास्ति; तदनायत्तत्वात् । कस्य कर्मणः किं फलं भविष्यति; कदा च भविष्यति इति स न जानाति; न च स स्वेच्छानुसारं तत् क्रमेण-अक्रमेण वा प्राप्तुं शक्तः । यतो हि "यच्चिन्तितं तदिह दूरतरं प्रयाति; यच्चेतसा न निहितं तदिहाभ्युपेति' । पुत्रेष्टि यज्ञं पुरुषः कर्तुं शक्तः, तथापि तत्फलप्राप्तिस्तदधीना नास्ति; किन्तु दैवायत्ता । त्वम् अथवा कोऽपि जनः कर्मफलहेतुर्न भवेत् । कर्मफलासक्तो जन आत्मानमिष्टानिष्टफलहेतुं विधत्ते; तदनासक्तस्तु न (गीता 18–12) । सर्वस्यापि जनस्य अकर्मण्यपि आसक्तिर्न भवेद्; यतो हि विहित कर्मत्यागेऽपि सिद्धिर्न भवति, यथा 'न च संन्यसनादेव सिद्धिं समधिगच्छति' (3-4) इतश्च मोह पूर्वकं कर्मत्यागस्तामसः, कायक्लेशभयात् कर्मत्यागश्च राजसः, इतश्च यः स्वरूपतः कर्मत्यागमिच्छेत् स तथा कर्तुं न शक्तः, ततश्च त्वं फलासक्तिं त्यक्त्वा कर्माणि कुरु इति तात्पर्यं फलति ।

लौकिकदृष्ट्यापि पद्यमिदमुपयोगि । वयं कर्मकर्त्तारः स्मः । तत्फलस्य दाता तु परमात्मैव तत्र जीवस्य नाधिकारः । अत एवास्माभिरुद्यमस्तु कार्यः; तत्फले दैवे नास्माकमधिकारः । यदि वयं फलदृष्टिं स्थापयिष्यामः तदा कर्माणि वैगुण्यमप्याशास्यते । इतश्च अस्मदिष्टफले चाऽप्राप्ते वयं निरुत्साहा भूत्वा अकर्मण्या अपि भवितुमीशाः । परं भगवता अस्मत्समक्षमीदृक्सुन्दरः प्रकारो विन्यस्तः, येन अस्माकमन्तः सन्तोषो भवति ।

ये परीक्षादित्सवश्छात्रा उत्तीर्णतारूपफलमुद्दिश्य परिश्रमरूपकर्म कुर्वन्ति, तत्फलेऽप्राप्ते ते इत्थं निराशा भवन्ति यत् तेषु कतिपये त्राप्ययानाद्यधस्ताद् आत्मानं पेपयन्ति । अपरे च तत्परीक्षातो निर्विण्णाः सन्तः सर्वथा निष्कार्या एव भवन्ति । अथवा अपरे उत्तीर्णतामात्रदृष्टयः प्राप्तोत्तीर्णता अपि यद् योग्यतां नासीदन्ति तत्कारणमेतदेव भवति यत् तत्र तैरुत्तीर्णतैव केवलमुद्दिष्टा । ततस्तत्फलदृष्टौ तेषां कर्मणि विगुणता जाजायते; येन तेषां परमपुरुषार्थरूपा योग्यता न जायते, किन्तु तैः सीमितफलमेव प्रमाणपत्रमात्ररूपेण प्राप्यते, असीमित फल योग्यता च न प्राप्यते या सर्वत्र तेषां लाभकारी ।

भगवान् कर्मणः फलमनुद्देश्यमभिधाय कर्मणो नैष्फल्यं न पिशुनयन्नस्ति किन्तु सीमितफलाद् दृष्टिमपसार्य कर्म पूर्णरूपेण कारयित्वा जनेभ्योऽसीमितफलप्राप्त्यवसरं दत्ते । तदेदद् वस्तुतो युक्तमेव यत्—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।<br>
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥

इति । एतेन असफलानामपि नैराश्यमनुत्साहो वा न भवति, धैर्यं विगलितं न भवति, सफलानामपि अभिमानो न जायते । अथवा असफलतामनुनाय जनानामकर्मण्यतापि न

प्रवर्तते । कर्म च तत्पूर्णं भवति, विगुणं न भवति । एतेनैव पद्येन उपक्रमोपक्षिप्त-विषयेऽपि सिद्धान्तोऽयं सिद्धो यद्–गीता न वेदविरोधिनी, न वा वैदिकयज्ञदेवपूजादिकर्म-विरोधिनी । तस्याश्च परमपुरुषार्थो मुक्तिरेव न स्वर्गः । तस्या विषयो ज्ञानयुक्तं कर्म अर्थात् फलाशारहित कर्म ।

## 11

## सांख्ये प्रकृतेः स्थानं सत्यकार्यवादश्च ।

अथवा

## भ्रष्टचेतांसि प्रकृतिं यान्ति योगनिषेवया । (1985)

अथवा

## भस्मीभूतस्य देहस्य पुनरागमनं कुतः । (1983)

संख्याप्रधानं हि सांख्यशास्त्रम् । शास्त्रेऽस्मिन् पञ्चविंशतितत्त्वानां सम्यक् विवेचनं वर्तते । तत्र कानिचित् तत्त्वानि केवलं कारणानि. कानिचित् च कारणानि कार्याणि, केवल कार्याणि च परं तत्र तत्त्वमेकम्, सर्वेषु यदस्ति विलक्षणम् । एषामेव तत्त्वानां सम्यक् विवेचनमधः क्रियते ।

प्रकृतिः केवलं कारणम् । अस्या अपरं नाम प्रधानम् । अनवस्थादोषभयादस्याः किमपि अन्यत्कारणं न मन्यते तत्त्वविद्भिः । अत एव इयं अन्यस्य कार्यमपि न । महदहंकारतत्त्वे पञ्चतन्मात्राणि तानि कार्याणि कारणानि वापि मन्यन्ते । महत्तत्त्वस्यांहकारस्य कारणं प्रकृते कार्यञ्च । अहंकारमिदं पञ्चतन्मात्राणामेका-दशेन्द्रियाणां च कारणं, परं महत्तत्त्वस्य कार्यम् । पञ्चतन्मात्राणि आकाशदिस्थूल-भूतानां कारणानि, अहङ्कारस्य कार्याणि च । आकाशादिपञ्चस्थूलभूतानि एकादशेन्द्रियाणां च केवलं कार्याणि न कारणानि खलु । पुरुषस्तु न कार्यं न च कारणम् । अतो हि युक्तमेवोच्यते —

"न प्रकृतिन विकृति पुरुषः"

सांख्यशास्त्रं सत्कार्यवादि वर्तते । मतेऽस्य कार्यं कारणे सन्निहितं भवति । कारण व्यापारेण तु तस्य केवलमभिव्यक्तिमात्रं भवति । सर्वथा नूतनं वस्तु न जायते । इत्थमेव कार्यस्य विनाशे सति तस्य स्वभूत कारणे केवलं तिरोभाव एव, न च तस्य विनाशः । तत्कार्यं स्वव्यक्तरूपं त्यक्त्वा सूक्ष्मरूपत्वेन अव्यक्तरूपे स्वकारणे एव तिष्ठति, अव्यक्ते सति तद् दृष्टिपथं नायाति । कार्यात् कारणमनुमीयते इत्यस्ति हि सांख्यमतम् । यथोक्तमिश्वरकृष्णेन सांख्यकारिकायाम्—

असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥

जगति यत्किञ्चिदपि दृश्यते तत्सर्वं प्रकृते कार्यम् । तस्माद्धेतोर्हि सा मूल प्रकृतिरिति कथ्यते—

"मूल प्रकृति रविकृतिः"

प्रकृति सत्त्वरजस्तमसां साम्यावस्था । यदा गुणास्ते तस्यां समत्वेन तिष्ठन्ति तावत्कालं तत्र कोऽपि विकारो न जायते । विकारस्तु तदैव सम्भवति यदा गुणेष्वेषु सक्षोभस्संजायते । गुणानां भावाभिभावात् कार्यस्योत्पत्तिर्भवति । गुणविकारावस्थायाम् एको गुणः प्रबलतमः संजायते, अन्यौ द्वौ च तस्य सहायकौ भवतः । सद्गुणप्रधाने सति सद्गुणप्रधाना सृष्टिर्भवति । रजोगुणप्रधाने सति रजोगुणप्रधाना सृष्टिः । अयमेव क्रमः अग्रेऽपि दृष्टव्यः । तदुक्तं भवति यत्प्रकृति गुणैरेभिः कार्यं व्याचरति । संसारेऽस्मिन् कोऽपि मानवः सत्वगुणोपपन्नः कोऽपि रजोगुणप्रधानः कोऽपि रजोगुणप्रवृत्तियुक्तश्च । किमत्र कारणम् ? सर्वोप्येष प्रकृते प्रभावः ।

अत्रैव एतद्व्यतिरिक्तमस्माभिर्व्यक्ताव्यक्तपुरुषेस्वन्तरमपि ज्ञातव्यम् । व्यक्तं कार्यं भवति । तत् खलु अव्यक्तस्यानुमाने हेतुः । यतो हि कार्यं सकारणं भवति । अथ च व्यक्तं विनाशि । यतस्तत् किञ्चित्कालाकन्तरं स्वरूपं त्यक्त्वा स्वकारणे विनश्यति । प्रकृतेरनुमितौ हेतुभूतत्वाद् व्यक्तं लिङ्गमपि कथ्यते । प्रकृतिः अतीव सूक्ष्मा अत एव अप्रत्यक्षो मता । कार्यं हि तस्य ज्ञानाय साधनम् । व्यक्तस्य निजास्तित्वं न भवति, हि तत्परतंत्रं पराश्रितं च । निजास्तित्वस्थापनार्थं व्यक्तं प्रकृतिमपेक्षते । अनेन हेतुना व्यक्ताव्यक्तयोराश्रयः सम्बन्धो वर्तते ।

प्रधानम् अचेतनम् । तत्केवलं पुरुषसंयोगाच्चेतनवद् दृश्यते । प्रसवधर्मयुक्तत्वादिदं प्रसवधर्मीति कथ्यते । प्रधानमविवेकि विषयि चापि मस्ति यत्प्रधानं केनापि हेतुना विपरीतत्वं न याति । सांख्यकारिकाकारेण प्रकृतिस्वरूपमित्थं प्रतिपादितम्—

त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥
विषयिभूत्वादिदं जनैः नानारूपेण ज्ञेयं भवति ।

पुरुषस्तु चेतन प्राणी परं यदा स प्रकृत्या सह संश्लिष्टो भवति तदा स प्रकृतेः सर्वान् गुणान् स्वात्मनि मन्यमान 'अहं कर्त्ता', 'अहं भोक्ता' इति मन्यते । परं परमार्थतः स न तु कर्त्ता न च भोक्ता । प्रकृतिः स्वगुणानां भावाभिभावाद् व्यक्तकार्यरूपं जगत्सर्वमभिव्यनक्ति तथा तत्सर्वं भोगार्थं भवति । सा स्वयमेव स्वकार्यं न भुङ्क्ते । अत एव सा भोक्तारं वाञ्छति । अनेनैव कारणेन पुरुषेण सह तस्याः सम्पर्को भवति । सा नायिका इव भोग्या । नायिका स्वरूपदर्शनार्थं यथा नायकमपेक्षते तथैव प्रकृतिनायिकापि स्वरूपं दर्शयितुं पुरुषमपेक्षते । पुरुषस्यापि कैवल्याय प्रकृतेरपेक्षा भवति । पुरुषस्य प्रकृतेश्च संयोगस्य अपरं कारणं अनाद्यविद्या अप्यस्ति । अयं संयोगः तावत्कालपर्यन्तं तिष्ठति यावत्कालं केवलं संयोगः भवति । अनादि संयोगविच्छेदनार्थं कैवल्यमपेक्षितं भवति । इदं पुरुषस्य प्रकृतेश्च विवेकेनैव सम्भवति । इत्थं यत्र प्रकृतेः स्वरूपं दर्शयितुं पुरुषस्यावश्यकतास्ति तत्रैव स्वकैवल्यार्थं प्रकृतेरपेक्षास्ति । एवं

पारस्परिकोपकाराय भोगार्थं च अनादि संयोगत्वात् कैवल्यार्थं पुनः संयोगः भवति । यथोक्तं सांख्यकारिकायाम्—

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥

अत्रेदमुक्तं भवति यत्संयोगोऽयं द्विविधः । भोगाय संयोगः केवलं अविद्यया भवति । अपरः संयोगः केवलं कैवल्यार्थं भवति । यदा प्रकृतिः चिरकालं यावत् पुरुषस्य भोगेनोप्रकृता भवति तदा सा पुरुषस्योपकारायोत्सुका भवति अर्थात् कृतस्य कर्मणो भोगेन क्षयत्वात् पुरुषे कैवल्येच्छा जागरूका भवति अथ च तस्यां जागरूकायां सत्यां तदर्थमभिनवसंयोगपरम्परा प्रवर्तते या केवलं कैवल्यार्थं भवति । पुरुषस्तु प्रकृतेः संयोगमेत्य तस्याः गुणान् स्वात्मनि मन्यमानः 'अहं सुखी अस्मि', 'अहं दुःखी अस्मि', अहं कर्त्ता, भोक्ता चास्मि इति मन्यते । परन्तु यदा तस्य ज्ञानं भवति तदा स प्रकृत्या आत्मनः पृथकत्वमनुभवति । सैव दशा—कैवल्यशेति कथ्यते । अत एव प्रकृतेः पुरुषस्य च स्वरूपविषये सत्यमेवाह—

अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते,
जहात्येनां भुक्तभोगामजोन्यः ॥

अर्थात् प्रकृतिरेकास्ति, जन्मरहिता तथा महदादितत्त्वानामुत्पादकत्वात् कारणरूपास्ति । एका भवत्यपि रजस्सत्त्वतमोरूपत्रिगुणात्मिका तथा मूलञ्चासौ इति मूलप्रकृतिरिति कथ्यते । पुरुषः सुखादिभोगेन तामनुसरति तथा भोग सम्पादनानन्तरं अनात्मवस्तु इति मत्वा तां जहाति ।

## 12

## दुःखात्यन्तनि ृत्तिः कथं संभ ेत् ।

अथवा

## दुःखत्रयाभिधाताज्जिज्ञासातदभिधातके हेतौ । (1982)

अथवा

## सुखं हि दुःखान्यनुभूये शोभते । (1982)

इह खलु सुधाविषपरिपूर्णे जगदर्णवे नैसर्गिक जन्मवतां जनुकूल प्रतिकूलतया वेदनीयसाधनग्रहणप्रहणाभिमुखी प्रत्यहं प्रवृत्ति । सा च कदाचित्कथंचिदांशिक वैशिष्ट्यभाग् भवन्त्यपि नैकात्यन्ततः कस्यापि सुखं सम्पादयितुं दुखञ्चोत्सादायितुमिति तत्त्वातत्त्वविवेकौपकायिक व्याप्त्याऽनुमीयते । यद्यप्याध्यात्मिकाविदैविकाधि भौतिकादि-नामात्मकं दुःखं रसायनीतिशास्त्र वैदिकतान्त्रिकोपायैः निवर्तयन्तिः सुखञ्च

कामिनीस्रक्कस्तूरिकामोदचन्दनांलकार रमणीयवास प्रभृतिभिरावर्तयन्ति बुद्धि-वैभवाधरीकृत वाचस्पतयस्तथापि नावश्यं प्रागुक्तोपायैःतत्तद्दुःखहानं तत्तत्सुखोपायानञ्च संभवति—तदुक्तमीश्वरकृष्णेन—

दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ ।
दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावात् ।।

दुखत्रयाभिघातात् तदभिघातके हेतौ जिज्ञासा भवति, दृष्टे सा अपार्था चेत् । न एकान्तात्यन्ततोऽभावात् इत्यन्वयः । दुःखत्रयाभिघातात् न्यायमते अभिघातो नाम शब्दजनकसंयोगः, सांख्यमते अभिघातो नाम बाधजनकसंयोगः दुःखं बुद्धितत्त्वे वर्तते, आत्मापि प्रतिबिम्बतासम्बन्धेन बुद्धितत्त्वे वर्तते, तत्रात्मप्रतिबिम्बे दुखं संक्रामति, तद्दुःख आत्मनः प्रतिकूलवेदनीयं भवति अतः प्रतिकूलवेदनीयत्वाऽपराभिधान बाधजनकसंयोगः दुखत्रयेण सह आत्मनः सम्बन्धः, तथा च दुखत्रयाभिघातात्-दुखत्रयेण सह आत्मनः प्रतिकूलवेदनीयत्वारव्थाऽनिष्टसंयोगात् हेतोः त्रिविधदुखात्यन्ततो छेदात्मकमोक्षस्य जनकहेतो—निमित्तकारणमिति । त्रिविधदुखनाशात्मक मोक्षकारणं ज्ञातुं समेषां जिज्ञासा जायते । दृष्टे-प्रत्यक्षसिद्धे औषधिसेवनादिकप्राप्ते सति तत्रैव जिज्ञासायाः प्रशमनात् सांख्यशास्त्रज्ञाने या जिज्ञासा अपार्था-अपगतार्थ, निरर्थिका इत्यर्थः । प्रत्यक्षसिद्धमौषधादिकमेव दुःखत्रयनाशहेतुर्भवति न तदतिरिक्तं किञ्चिदपि कारणं विद्यते तदर्थं जिज्ञासा भवेत् इत्यतो जिज्ञासा प्रदर्शन व्यर्थमिति चेन्न शंकनीयम्-एकान्तात्यन्ततोऽभावादिति ।

'एकान्तात्यन्तत' अभावात् पदद्वयं वर्तते । तत्र 'एकान्तान्त्यन्ततः' इत्यस्य एकान्तात्यन्तयोरित्यर्थः । एकान्तात्यन्तत इत्यत्र आद्यादिभ्यः उपसंख्यानम् (5।4।54) इत्यनेन एकान्तात्यन्तयोरिति षष्ठ्यन्तात्सार्वविभक्तिक तासि प्रत्ययकरणात् अभावादित्यनेन सन्धिकरणाच्च एकान्तात्यन्ततोऽभावादित्यस्य निष्पत्तिः ।

त्रिविधं दुःखं कीदृशमिति जिज्ञासायाम्-आध्यात्मिकाः-आत्मानं देहमधिकृत्य जायमानं स्वाभाविकं अशनपिपासादिकं वातपित्तकफादिप्रकोपज्वरादिकं, तथा आत्मानं अन्तःकरणम् मनोप्रभृतिमधिकृत्य जायमानं कामादिविषयकं दुखम्-तत्सर्वमाध्यात्मिकम्, आधिभौतिकम्-भूतानि-चौर वैरि सिंह-सर्व-वृक्ष-शिलाप्रभृति चराचरजातीयानि अधिकृत्य-निमित्तीकृत्य जायमानं दुःखम् । आधिदैविकम्-देवान्-यक्षभूतराक्षसदैत्यादीन देवकृतान्चातिवृष्टिवातातापादीन् अधिकृत्य जायमानं दुःखम् तत्राध्यात्मिकदुःखमपि द्विविधं शारीरं मानसञ्च । तत्र शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम्, मानसञ्च कामक्रोधलोभमोहभयेर्ष्याविषादजन्यम् ।

दुःखत्रायम्, परञ्च तेषां दूरीकरणस्य दृष्टोपायो विद्यमानत्वेन सांख्यस्य जिज्ञासा निष्फलेति । यतोहि अर्के चेन्मधुविन्देत किमर्थ पर्वतं व्रजेत्, इष्टस्यार्थ संसिद्धौ को विद्वान् यत्नमाचरेदित्याभाणेन दृष्टोपायस्य महत्त्वप्रतिपादनात् । सन्ति च शतशोपायाः शारीरदुखस्य दूरीकरणायानेकैरूपाया भिषजां वरैः समुपदिष्टाः । मानसेस्यादिसन्तापस्य दूरीकरणाय मनो पानभोजनविलेपनवस्त्रालंकारादिपदार्थानां

सम्प्रयोगः । एवमाधिभौतिकस्यापि दुखस्य नीतिशास्त्राभ्यामकुल निरत्ययंस्थाना-ध्यवसादि प्रतीक हेतुः संभवत्येव । तथाधिदैविकस्यापि दुःखस्य मणिमन्त्रौषधयोपायः सम्प्राप्नोत्येव, एवञ्च त्रिविधस्य दुखस्य दृष्टोपाये विद्यमाने सांख्यशास्त्रस्य जिज्ञासा निष्फला इति न विचारणीया, यतो हि-एभिरूपायैरात्यन्तिक निश्चयेन च दु खनिवृत्त्यदर्शनात् सांख्यशास्त्रस्य जिज्ञासा सप्रयोजना । एतदुक्तं भवति-यथाविधि रसायनकामिनीनीतिशास्त्राभ्यासमंत्राद्यु पयोगिनापि आध्यात्मिकदुखनिवृत्तिरदर्शनात् अनात्यन्तिकम्, इति सुकरस्य दृष्टोपायस्य ऐकान्तिकाऽत्यन्तिकत्वादर्शनात् न दृष्टोपायः सार्थक इति सांख्यशास्त्राध्ययनेन तत्प्रयोगपरिशीलनेनैव दुखस्यात्यन्तनिवृत्ति निश्चयेन संभवेदिति सांख्यशास्त्रमवश्यमेव अध्येतव्यमिति सिद्धयति ।

न च वैदिकोपायस्य यागस्याचरणेन दुःखनिवृत्तिर्भविष्यतीति पुनरपि सांख्यशास्त्रजिज्ञासा निष्फलेति न विचारणीयम्—

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान्, व्यक्ताव्यक्तज्ञविज्ञानात् ॥2॥

गुरुमुखादनुश्रूयते इत्यनुश्रवो वेदः । एतदुक्तं भवति श्रूयते एव न केनापि क्रीयते इति श्रुतिः । तत्र भव आनुश्रविकः वेददृष्टकार्यकलापः सोऽपि दृष्टवत्—वैदिक-ज्योतिष्टोमादिकार्यकलापोऽपि लौकिकोपायनैव तुल्यो वर्तते । एकान्तिकात्यन्तिकदुःख-निवृत्तिरदर्शनात् । अन्यच्च स वैदिकोपाय अविशुद्धिक्षयातिशययुक्तत्वेन दुःखत्रयनिवृत्तौ न हेतुर्भवितुमर्हति । अविशुद्धि-सोमादियागस्य पशुवधकरणेन तत्र साधनता न भवितु शक्या ।

तस्मात् आनुश्रविकस्य दुःखापधातकोपायात् सोमपानस्य अविशुद्धत्वात् अनित्यसातिशयफलत्वात्तद् विपरीतो विशुद्धः कश्चनोपायोऽऽवश्यको वर्तते । तद्विपरीतश्च व्यक्ताव्यक्तज्ञविज्ञानमेव, तेषां ज्ञानन्तु सांख्यशास्त्रैणैव प्रभवेदिति सांख्यशास्त्रं श्रेयस्करत्वेनाध्येतव्यमिति ।

अत एव ईश्वरकृष्णेन सांख्यकारिकायाम्—

'व्यक्ताव्यक्तविज्ञानादिति' ।

अयमभिप्रायः—व्यक्तम्—विविच्यते प्रकृतितः कार्यरूपेण भिद्यते इति व्यक्तम्-बुद्धयादिस्थूलभूतपर्यन्तम्, अव्यक्तं-मूलकारणं प्रकृतिः । ज्ञः-चेतनः, तेषां प्रकृतिविकृति-भूतानां पञ्चविंशतितत्त्वानां विवेकेन यथार्थज्ञानं तस्मिन् सत्येव समेषां दुःखानां निश्चयेन आत्यन्तिकी निवृत्तिः नान्येन केनचिदिति सांख्यशास्त्रे जिज्ञासा साधीयसी । अतएव भगवता वेदव्यासेन श्रीमद्भागवतमहापुराणे—

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्यकर्माणि तस्मिन् दृष्टे परावरे ॥

विवेक प्रकारश्च—व्यक्तज्ञानपूर्वकमव्यक्तस्य तत्कारणस्य ज्ञानम् । तयोश्च पारार्थ्येनात्मा परो ज्ञायते इति ज्ञानक्रमेणाभिधानम् । एतदुक्तं भवति—श्रुतिस्मृती-तिहासपुराणेभ्यो व्यक्तादीन् विवेकेन श्रुत्वा शास्त्र युक्त्या च व्यवस्थाप्य दीर्घकाला-दनैरन्तर्यसत्कारसेवितात् भावनामयात् विज्ञानम् ।

## 14

## दर्शनेषु मोक्षस्वरूपम् ।

अथवा

## भारतीय दर्शनशास्त्रेषु मोक्षस्य परिकल्पना । (1983)

अथवा

## मरणोत्पत्तियो तु गरीयो मरणंभ त् । (1983)

अथवा

## दग्धेन्धनानलवदुपशमो मोक्षः । (1985)

इह खलु जगत्येशेषा अपि पुरुषा वपुषा वचसा चेतसा चानवरतं धर्मार्थकाममोक्षाणामेवैकतमं कमप्यर्थयमाना प्रतीतिपथमवतरन्तीति पुरुषैरर्थ्यमानत्वात् त एव (धर्मार्थकाममोक्षा) पुरुषार्था इति जागर्ति तैर्थिकानां निर्णय । तेषु चतुर्ष, पुरुषार्थेषु पुरुषैरर्थ्यमानत्वाविशेषेऽपिनिरपायत्वान्निरूपमनिर्वृ ति–रूपत्वात् 'न स पुनरावर्तते' इत्यादि श्रुतिशतोपगीतत्वाच्च मोक्ष एव परमं सत्वं श्रयतीति इत्यत्र नास्त्यत्र संशय ।

दर्शनशास्त्रं हि भारतवर्षस्य सर्वोत्तमो निधि । दर्शनानाञ्च नास्तिकास्तिकत्वाभ्यां द्वैविध्यं वर्तते । वेदप्रामाण्यानभ्युपगन्तृभि चार्वाकबुद्धजिनै प्रवर्तितानि षड्दर्शनानि नास्तिकानि, वेदबद्धादरै गौत्तमकणाद-कपिल-पतञ्जलि बादरायणैः विरचितानि षड्दर्शनान्यास्तिकानीति व्यवह्रियते । आस्तिकदर्शनेषु पूर्णप्रज्ञ-पाशुपत-शैव-प्रत्यभिज्ञा रसेश्वर-पाणिनीयप्रभृतीनां समावेशेऽपि ततो न्यायादिदर्शनानां अतिप्रसिद्धतया भूयस्त्वेन श्रुत्यनुरोधितया च तेषां तद् द्वारकं षाड्विध्यं विशेषतश्च श्रद्धीयते ।

अन्यञ्च इह संसारे आबालवृद्ध सर्वे जना बुभुत्सवो वर्तन्ते, तेषु केचनाधिभौतिकम्, केचनाध्यात्मिकं केचनाधिभौतिकं वस्तु जिज्ञासितु चेष्टन्ते । भगवती श्रुतिरप्युपदिशति मुक्ति स्यादिति समुपस्थितायां जिज्ञासायाम्—

कुलं पवित्रं जननी कृतार्था
विश्वम्भरा पुण्यवती च तेन ।
अपारसच्चित्सुखसागरेऽस्मिन्
लीनं परे ब्रह्मणि यस्य चेतः ।।

इत्यभियुक्तानां प्रतिपादनेन ब्रह्मसाक्षात्कार एव पुरुषार्थज्ञानमिति निश्चप्रचम् । तच्च ज्ञानं वेदान्तोक्तचतुष्टयमहावाक्यश्रवणमनननिदिध्यासन-परिबृंहितसंप्रज्ञातासंप्रज्ञातसमाधिलीनतया समुद्भवति । असंप्रज्ञ तसमाधिशीलानां प्रथमं कल्पिकमधुभूमिक प्रज्ञाज्योतिरतिक्रान्तभावनीयानां चतुर्णां योगिनां प्रथमकल्पिकामधुमती-ज्योतिष्मती विशोकानाम्भ्यश्चतस्रोऽवस्था परिस्फुरन्ति ।

अयञ्च असंप्रज्ञातसमाधिरकृतब्रह्मसाक्षात्काराणां ब्रह्मसाक्षात्कारहेतुरिति सर्वदोपयोगी ।

समेषां दर्शनानां रीति मोक्षस्वरूपं विविच्यते—

**1. काणाददर्शनम्—**

कणादेन महर्षिणा प्रणीतं दर्शनं काणादमिति निगद्यते । एतदेव च विशेषनामकमेकं पदार्थमधिकृत्य कृतमिति वैशेषिकमित्यपि व्यपदिश्यते । अथ कथमिदं दर्शनमौलूक्यदर्शनमिति नाम्ना व्यपदिश्यते इति चेदत्र केचित् 'उलूक' इति कणादस्य कौतिकमुपनाम आसीदिति तदाघृन्यैवौलूक्य नाम्ना दर्शनमिति व्यपदेशि माधवाचार्येण । अपरे तु उलूको यथा दिवाकरकरप्रकरभास्वरेऽपि वासरे भासमानानापि पदार्थान् नाक्षिलक्षी—कर्तुं प्रभवति तथा कणादोऽपि निखिलप्रमाणप्रकाशे देदीप्यमानमपि वेदं प्रमाणतया नावलोकयितुमशक्नोदिति स उलूक इति व्यपदिश्यते, सादृश्येनोपचारात् । तदीयञ्च दर्शनमौलूक्यदर्शनमिति सोपहासं संगिरन्ते वैदिकपक्षपातिनः प्रेक्षावन्त ।

दर्शनेऽस्मिन् महर्षि कणभक्षो द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यान् षट्पदार्थानभ्युपगम्य तेषामेव सविशेषज्ञानात् उपगम्यतेऽपवर्गो जनिमद्भिरित्युररीकरोति। अत एवासौ धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्नि श्रेयसमिति सूत्रयांचकार ।

**2. गौत्तमदर्शनम्—**

गोतमेन महर्षिणा प्रणीतं दर्शनं गौत्तमदर्शनामित्युदीर्यते । एतदेव दर्शन-माक्षपददर्शनमपि भणते । अक्षपाद इति भगवतो गोतमस्यैवान्वर्थमभिधानान्तरम् । एवं तत्राख्यानकं प्रचरति यद् गुरुकुले विधाध्ययनाय निवसन् निरतिशय तीक्ष्ण धीषणोऽतितरां वस्तुतत्वभावनशीलश्च गोतमो जातु मार्गे गच्छन् भावनापरायणतया पुरः समापतितमपि कूपमश्यतत्रैव निपपात । शीतर्तो शीतेनातितरां बाध्यमानोऽप्य-नागत्याधि कूपमेवाहोरात्रं निनाय । प्रात कूपादुदकं उद्धर्तुमागतवत्या कयाचिदुदक-हारिण्या व्यधमानसया मन्दक्रन्दन तथा चाहूतजनै कथंचन कूपादुदधारि । आनायि च तदानागमनेनातिचिन्तितस्य गुरो सकाशम् । तदा तदीय क्लेशेनातितरां दयमानो गुरुस्तस्मै 'अधप्रभृति तव पादावपि चक्षुषो इव चाक्षुषं ज्ञानं जनयितु प्रभबेताम् 'त्वं यथेच्छं पदार्थान् भावयन् व्रज' इति वरं प्रादात् । तदाप्रभृत्यैवासौ अन्वथनाक्षपाद इति पप्रथे ।

दर्शनेऽस्मिन् तार्किकतल्लजो भगवानक्षपाद प्रमाणादीन् षोडश पदार्थानभ्युप-गच्छति । तांश्च षोडशापिद्रव्यादिषु सप्तष्वेवान्तर्भावयान्त्यर्वाचीनाः । एष च भूम्ना कणाददर्शनमनुसरन्नपि तद्वैलक्ष्यणेन प्रमाणद्वयमधिकमुररीकृत्य वेदमपि प्रमानं मन्वान स्वीयामास्तिकतां द्रढयाञ्चकार । जगत सृष्टिचायमपि कणभक्ष इवैव परमाणू पादानत्वेन परमेश्वरस्य निमित्तत्वेन चाभ्युपगच्छति । जगत्कर्तुत्वेनैव परमेश्वर-मनुभिनोति । अपवर्गञ्च दुखात्यन्तविमोक्षमेव मनुते । तदत्यन्तविमोक्षोऽपवर्ग इति सूत्रेण लक्षितवान् । आत्मानञ्चायं ज्ञानाधिकरणं मन्यते न तु वेदान्तीव ज्ञानस्वरूपम् ।

सत्यंज्ञानमनन्तं ब्रह्मेत्यादिज्ञानात्म-भेद-प्रतिपादिका श्रुती: अभेदभावनयैव यतितव्यमिति श्रुतय संगच्छन्ते । अत एव निरञ्जन परमं साम्यमुपैति इत्यादय: साम्यप्रतिपादिका: श्रुतय संगच्छन्ते । मोक्षदशायामपि न जीवपरमेश्वरयोरैक्यं संभवति भेदस्य नित्यत्वात् । वेदाश्च पौरुषेयं गम्यते छन्दांसि जज्ञिरे तस्मात् इति श्रुतेरेव छन्दसां ततः परमेश्वरात् जन्यत्वसिद्धे ।

## (3) सांख्यदर्शनम्—

कपिलेन महर्षिणा प्रणीतं दर्शनं कापिलमित्युच्यते । एतदेव दर्शनमन्वर्थतया सांख्यमिति संगीर्यन्ते । तथाहि-सम्यक्ख्यानं संख्या । आतश्चोसर्गेइत्यङ् ।

तत्त्वज्ञानविधानसमर्थं दर्शनमित्यर्थ: । अथवा संख्या पदार्थानां गणना तत्प्रधानं दर्शनं सांख्यम् । भवति चात्र व्यक्ताव्यक्तज्ञसंख्यानां महदहंकारैकादशेन्द्रिय तन्मात्र महाभूतेति त्रयोविशंतेर्व्यक्तानां अव्यक्तनाम्न्या प्रकृते एकस्य ज्ञस्य पुरुषस्य चेति तत्त्वानां निखिलदशनान्तरापेक्षया अधिकानां गणना प्राधान्येनेति । सास्त्यस्मिन्निति सांख्यम् । दर्शनेऽस्मिन् सत्वरजस्तमसां साम्यावस्थास्वरूपाया: प्रकृतेरेवप्रपञ्चकर्तृत्वम्, पुरुषस्य तु पुष्करपलाशवन्निर्लेपस्यापि चेतनतया जडाभूतायां प्रकृत्यां चैतन्याभिमान-सम्पादकत्वम् । अचेतनां भोग्यानां भोक्तृत्वञ्चेति द्वयमेवक्रुत्यम् । जगत आरंभस्तु प्रकृतेरेव । ततश्च प्रकृतेरेव जगदुत्पतौ सिद्धायामीश्वरो नावश्यक उत्याचष्टे ।

आधिभौतिकाधिदैविकाध्यात्मिकेति दु:खत्रयात्यन्तिकनिवृत्तिमेवापवर्गमङ्गी-करोति । स चापवर्गो व्यक्ताव्यक्तज्ञविज्ञानात् सत्वपुरुषान्यताख्यातिरूप: परिणमते । सति चापवर्गे सप्तरूप–विनिवृत्तिः पर्यवस्यति ।

## (4) पातञ्जलदर्शनम्—

योगिनो हि सांख्याभिमतमिव सृष्टिप्रक्रियां तदभिमतान्येव तत्त्वानि त्रीणि प्रमाणानि चाभ्युपगच्छन्त: तद् वैलक्ष्यण्येन 'क्लेशकर्मकर्शविपाकाशयैरपरामृष्ट पुरुष-विशेष: ईश्वर' इति लक्षणलक्षितमीश्वरमुररीकृत्य स्वायं दर्शनं नास्तिकताकलङ्क-पङ्कत क्षालयित्वा निस्सारितम । चित्तवृत्तिनिरोधरूपं समाधिं संप्रज्ञातासंप्रज्ञत्वाभ्यां सविकल्पकनिर्विकल्पत्वापर पर्यायं द्विधाभिद्यमान कैवल्यं मन्वते । चित्तवृत्तिनिरोध-रूपस्य योगस्य यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि स्वीकुर्वते । निरुक्तयोगस्य प्राधान्येन कैवल्यफलकत्वेऽपि अत्रान्तरफलानि निरुपमप्रसिद्धि-रूपा विभूतयो विजृम्भन्ते । अत एव समाधिसाधनविभूतिकैवल्याख्यान् चतुर: पादान् प्राणिनाय भगवान् पतञ्जलि: ।

## (5) मीमांसादर्शनम्—

अथातो धर्मजिज्ञासेत्यादि द्वादशलक्षणीं मीमांसां निर्म्मिमाणो भगवान् जैमिनीस्तु स्वानुष्ठितादखिलानभीष्टं सिद्धयतीति स्वीचकार । तत एव च निष्काम-रूपेणानुष्ठितादपवर्ग इति नावश्यमिश्वरोपासनादेरिति मुधा तदभ्युगम इत्यातिष्ठते । यागादिमेव च धर्मं मनुते—चोदना लक्षणो लक्षणोऽर्थो धर्म इति तल्लक्षणात् । चोदना

च विधिवाक्यमेव। चोदनापदस्य वेदमात्रपरत्वमभ्युपगम्य विधिमंत्रनामधेय निषेधार्थवादानां पञ्चनामपि वेदभागानामविशेषेण यागादि धर्मार्थकतां ब्रूते। उत्पत्तिनियोगप्रयोगाधिकारभेदेन विधेश्चातुर्विध्यमूरीकुर्वते। तत्र विनियोगविधेरङ्गत्वेन श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यासञ्ज्ञानि षट् प्रमाणानि। प्रयोगविधेरंगत्वेन श्रुत्यर्थपाठादीनि षट् क्रमबोधकानि च प्रमाणानीति संगिरते। मीमांसाशब्दस्यविचारे लक्षणया धर्मविचारशास्त्रमेतदिति व्यवस्थापयति।

**(6) वैयासिकदर्शनम्**—

अथातो ब्रह्मजिज्ञासेत्यादिना चतुर्भिरध्यायैः शारीरिकं मीमांसमानो भगवान् व्यासश्च सकलानां वेदान्तानां (उपनिषत्प्रमाणानां) श्रद्धये ब्रह्मणि तात्पर्यं संगिरमाणो ब्रह्म वाद्वितीयं वस्तु तद्भिन्नं सर्वं मिथ्येति प्रतिजानीते। संसारावस्था पारमार्थिकावस्था चेति अवस्थाद्वयं भावानामुगपगच्छति; पारमार्थिकी व्यावहारिकी प्रातिभासिकी चेति सत्तात्रयं पदार्थानामुररीकरोति। प्रत्यक्षानुमानागमार्थापत्तिअनुपलब्धिसंज्ञानि षट् प्रमाणानि मनुते। पारमार्थिकावस्थायां तत्त्वमस्यादिवाक्यमखण्डमेवाखण्डब्रह्म प्रतिपादयति। व्यवहारावस्थायां व्यवहारभट्टनय इति सिद्धान्तात् भट्टमीमांसकवदेव पदार्थजातमभ्युपगच्छति। जीवब्रह्मणश्चाविद्याकृतमेव भेदं सगिरते। तत्त्वमस्यादिमहावाक्यैर्ब्रह्मसाक्षात्कारे जाते जीवब्रह्मणोरैक्यं सम्पद्यते। तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते इतिश्रुते।

इत्थञ्च समेषां दर्शनानां मोक्षोद्देश्यकत्वेऽपि पारस्परिको विरोधो जागर्तितराम्। तथाहि वैशेषिक शब्दप्रमाणमेव नोररीकरोति, दूरे तन्मते तत्त्वमस्यादिवाक्यैर्ब्रह्मसाक्षात्कारस्य वार्ता। अथ चासौ निःश्रेयसेऽपि जीवेश्वरयोर्भेदमभ्युपगच्छन् द्वैतमेव डिण्डिमघोषमुद्घोषयति। परमणोश्च सृष्टिं कुर्वाणो जडादेव। जगदुत्पत्तिमभ्युपगच्छति। नैयायिकाश्च शब्दप्रमाणमभ्युपगच्छन्नपि ईश्वरोच्चरित त्वेन वेदस्य प्रामाण्यमनुमनुते। वैशेषिक इवैष च मोक्षेऽप्याचष्टे जीश्वरयोर्भेदम्। परमात्मनश्च ज्ञानाधिकरणं स्वीकरोति न तु ज्ञानस्वरूपम् 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिसिद्धं ब्रह्मणो जगदुत्पत्तिमवधूय परमाणोस्तामुररीकुर्वन् सुतरामेव अवैदिकीं सृष्टिप्रक्रियामाकलयति।

'एतस्मादात्मन आकाशं सम्भूतं' इत्यादि श्रुतिसिद्धमाकाशस्योत्पन्नत्वमवधूय तस्य नित्यत्वं प्रतिजानीते। सांख्यस्तु 'तदैक्षत बहुस्यां प्रजायेय', 'सोऽसृजत्' इत्यादि श्रुतिसिद्धं चेतनकर्तृत्वं जगतोऽनाहत्या चेतनात् प्रधानाज्जगत उत्पत्तिमङ्गीकुरुते। 'विज्ञानं ब्रह्म' इत्यादि श्रुतिषु जाग्रतीष्वपि बुद्धेरचेतनत्वमातिष्ठते।

इदञ्चाद्वैतदर्शनं सर्वाण्यपि अतिशेते। यथा सिंहं वने दृष्टवा शृंगालाः पलान्यते तथैव वेदान्तकेशरिण गर्जने जाते सर्वे अन्ये दार्शनिका हतोत्साहा जायन्ते। इत्थञ्च समेषां दार्शनिकां मोक्षपदार्थोऽतिसंक्षेपण विरुपित।

## 15

## धर्मशास्त्रं राष्ट्रोन्नतिश्च ।

अथवा

**न हि धर्मं त्यजेज्जीवितस्यापि हेतोः ।** (1984)

अथवा

**धर्मोनित्यः सुखदुःखे त्वनित्ये ।** (1985)

सुकृतेषु प्रवर्तयन् दुष्कृतेभ्यश्च निवर्तयन् धर्म एव निखिलं जगद् राष्ट्रं च धारयतीति धर्मशब्दस्य नापार्थकं प्रवृत्तिनिमित्तम् । यतोऽभ्युदयनि श्रेयससिद्धिः स धर्मः इति धर्मं परिभाषस्य दर्शनास्यापि अयमेवाभिप्राय । एवं च राष्ट्राभ्युदयहेतोर्धर्मस्य प्रकाशत्वाद् धर्मशास्त्राणाम् प्रयोजनीयतापि सिद्धा भवति ।

अत्रेदमवधेयम्—अनादिप्रवृत्तेऽस्मिन् सततसंसरणशीले संसृतिप्रवाहे अनिर्वचनीयाविद्यया प्रवाह्यमानानां प्राणिनां पुण्यपरंपरार्जितस्य दुर्लभस्य देवैरपि प्रार्थनीयस्य भारतेऽत्र मानवजन्मन किं प्रयोजनं किं वा तदुद्देश्यमिति विचारे सति धर्मार्थकाममोक्षाख्यं पुरुषार्थचतुष्टयमेव तत्प्रयोजनं सद्भिराप्तपुरुषैराख्यायते । तेष्वपि सर्वेषां मूर्धनि स्थितत्वात् इतरेषां त्रयाणां अर्थकाममोक्षाणां पुरुषार्थानां निदानभूतत्वाच्च धर्मस्यैव प्राधान्यं स्मृतं भवति ।

धर्मस्यस्थानम्—स्थानज्ञानं विना लोके न कश्चित् कस्यचिदपि सान्निध्यमाप्नोति । ततो धर्मस्य स्थानजिज्ञासायां—

पुराण न्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।।

इत्युक्तम् । एतेन विद्यानां धर्मस्य च समानाधिकरण्यमपि प्रदर्शितं भवति । विद्या ज्ञानमयस्तरु तस्य पुष्पं धर्म । अर्थकाममोक्षाश्च धर्मकुसुमजातानि फलानि इति भाव । एवं चत्वारो वेदाः धर्मस्य स्थानं भवन्ति, किन्तु ते पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिलिता सन्त एव ।

तत्र भागवतादिपुराणानि । न्यायपदेन प्रोक्तानि तर्कप्रधानानि न्यायवैशेषिकसांख्ययोगदर्शनानि धर्मजिज्ञासा ब्रह्मजिज्ञासा चेति मीमांसे । मनुव्यासविष्णुहारीत गौतमापस्तम्बवसिष्ठ-पराशर-शंखलिखित प्रमृतिस्मृतिकारैरुक्तं धर्मशास्त्रं, षट् च वेदाङ्गानि शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतिषाणि । एतानि चतुर्दश समुदितानि धर्मस्याधारभूतत्वात् स्थानपदेनोच्यन्ते ।

एषु चतुर्दशसु स्थानेषु द्विविधो धर्मः समुपदिश्यते प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । अहरह सन्ध्यामुपासीत इत्येवमादिः प्रवर्तयति इति प्रवृत्तिलक्षण उच्यते । मा हिंस्यात् सर्वभूतानि इत्यादिः हिंसादिपापेभ्यो निवर्तयति ततो निवृत्तिलक्षण उच्यते ।

अत्र कश्चिदाशंकते—किं धर्मो द्रव्यरूपः ? आहोस्वित् गुणरूपः ? उत क्रियारूप ?

तत्र पृथिव्यप्तेजोवाय्वाकाशकालादिगात्मनोभ्यो भिन्नत्वात् धर्मो न द्रव्यम् किन्तु आत्मनो विशेषगुणः स इति तार्किकाः । मीमांसकास्तु क्रियाव्यतिरिक्तो न गुणपदार्थ । अतो धर्म क्रियास्वरूप एव इति वदन्ति । 'धर्म चर' इत्यादि श्रुत्या, आचारः प्रथमो धर्म इति स्मृत्या च तस्य आचरणीयताविधानात् आचरणक्रिया एव धर्म इति सिध्यति ।

किं सर्वा क्रिया धर्मः । नेति । तथा सति जलताडनादेरपि धर्मतापत्ते । तस्मात्-श्रुतिस्मृतिसदाचारप्रतिपादितः नित्यमद्वेषरागिभिर्विद्वद्भिर्महर्षिभिः समाचरितः क्रियालक्षणो धर्म इति निष्कृष्टं धर्मलक्षणम् । प्रमाणं चात्र—

श्रुतिः स्मृतिः सदाचार
स्वस्य च प्रियमात्मन ।
एतच्चतुर्विधं प्राहुः
साक्षात् धर्मस्य लक्षणम् ।। इति मनु० ।।
विद्वद्भिः सेवितः सम्यक्
नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो
धर्मस्तं निबोधत ।। इति याज्ञवल्क्य० ।।

अस्यायमाशयः—स्वतः प्रमाणत्वात् श्रुतिः यदाह स धर्म । श्रुत्यविरुद्ध स्मृतिर्यदाह सोऽपि धर्म —

यस्मिन् देशे य आचार पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ।।

इति मनुनोक्तः श्रुतिस्मृत्यविरुद्धश्चेत् सदाचारो धर्म । श्रुतिस्मृतिसदाचाराविरुद्धं स्वात्मनः प्रियं कर्मापि धर्मः । अत्रैव सम्प्रदायमात्रशरणानामन्तर्भाव ।

राष्ट्रोन्नतेर्मूलम्—प्रत्येकमानवस्य सन्मार्गप्रवर्तकं धर्मशास्त्रं स्वे स्वे कर्मण्यभिरतिं जनयति । धर्मानुष्ठानेन च शुद्धचरित्राभिः प्रजाभि सर्वत समेधमानवैभवं स्वयमेव राष्ट्रं चौरादिरहितं संजायते । अपापे च संजाते सर्वोपद्रवरहिते राष्ट्रे सुखेन लोकानां लोकयात्रा प्रवर्तते इति तस्योन्नतेर्मूलम् धर्म एवेति नास्त्यत्र संदेहः । यथा चाशास्ते यजमानस्य राष्ट्रस्याभ्युदयाय भगवान वेद —

आ ब्रह्मन् ब्रह्मवर्चसी जायतामा राष्ट्रे राजस्य शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढा नड्वानाशु सप्तिः पुरन्ध्रिर्योषा सभेयो युवास्य यजमानस्य जायताम् । निकामे निकामे नः पर्जन्योऽभिवर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो न कल्पताम् ।।

यज्ञादधर्माचरणेनैव राष्ट्रे राष्ट्रोन्नति हेतवो ब्राह्मणाः ब्रह्मववर्चस्विनो जायन्ते । क्षत्रिया महारथाः गावः प्रभूतदुग्धाः । वृषभा वोढार । अश्वा शीघ्रगामिन नार्यः

सौभाग्यवत्य । युवान सभ्या । समये वृष्टिः । भूमयश्च प्रभूतान्नफलाः । ततः किमवशिष्यतेऽधिकं राष्ट्रसंवर्धनकरम् ?

किं धर्मशास्त्रं देवोपासनार्चनमेवोपदिशति ?

नहि । तदस्माकं त्रिधा धर्मं व्यवस्थापयति । आचारं, व्यवहारं प्रायश्चितं च ।

नित्यं सन्ध्योपासनादि कर्म । नैमित्तिकं ग्रहणस्नानादिकं काम्यं च पुत्रेष्टिप्रभृति कर्म निषेकादि श्मशानान्तं संस्कारविधानं च आचार ।

कीदृशो राजा भवेत् ? क मन्त्री ? कीदृशी राजसभा ? दण्ड्यानां को दण्ड ? कथं व्यवहारा निर्णेतव्या ? कियान् करो ग्राह्य ? अभिलेखानां के नियमा ? के केऽधिकारिणो नियोक्तव्या ? षड्गुणा राजनीति कथं प्रयोज्या इति सर्वराज्यविधानं व्यवहार ।

जानताजानता वा कृतानां पातकानां प्रक्षालनाय दानं तपोव्रतादिकं प्रायश्चितम् । एवं सर्वत्र धर्मस्य व्यापकता न केवलं देवार्चनादाविति सिद्धम् ।

धर्मशास्त्रं किमार्याणामेव कृते ? उतान्येषामपि ? उच्यते—

निषेकादिश्मशान्तो मंत्रैर्यस्योदितो विधि ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयोनान्यस्यकस्यचित् ।।

इति मनुवचनात् यद्यपि तत्राधिकारिण आर्या एव प्रोक्ता किन्तु 'वर्णाश्रमैतराणां नो ब्रूहि धर्मानशेषत' इति याज्ञवल्क्येन इतरपदोपादानात् सर्वेषां कृते हिताभिलाषि धर्मशास्त्रमिति सिध्यति ।

अत्रायं निष्कर्ष —धर्मशास्त्रे विशेष सामान्यश्चेति द्विधा धर्मो निरूपित । विशेष यजनयाजनादि वर्णाश्रमवतां कृते सामान्यं धृत्यादिकं सर्वेषां भगवानां कृते । तथा च मनु —

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रह ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ।।

जनोऽयं धार्मिकोऽधार्मिको वेति संशयश्चेद् उक्तैरेभिर्दशभिर्धर्मलक्षणैः निर्णय कर्तुं शक्यते । धृतिक्षमादिभिरन्वितश्चेद् धार्मिक तै विरहित, शून्यश्चेदधार्मिकः ।

सत्यं शौचं दया दानमिति च धर्मस्य चत्वारः पादा भवन्ति । कृतयुगे सर्वैरेभिर्युक्तो धर्म चतुष्पात् विद्यते । त्रेताद्वापरकलियुगेषु एकैकयाद क्रमेण ह्रस्यति । अतः इदानीं पापबहुलेऽस्मिन् कलौ दानमेव धर्मोऽवशिष्यते । उक्तं च दानमेकं कलौयुगे इति ।

राष्ट्रश्रेयस्करस्य सनातनस्य धर्मस्य पूर्तिः इष्टेन आपूर्तेन च संपद्यते । यज्ञार्चाहवनादि इष्टम् । आपूर्तं च सर्वेषां हिताय राष्ट्रे जलाशयारामकूपादिनिर्माणं द्विधा विभक्तेनानेन धर्मशास्त्रविधानेन धर्मशास्त्रं भारतीयविधानं राष्ट्रहिताय कल्पते । तद्विपरीतैर्धर्ममूल्यैर्मानवै रचितेन धर्मशून्येन विधानेन तु उन्नतिर्दूरे तिष्ठतु समस्तं राष्ट्रमेव विपत्स्यतेऽत्र न संदेह । हतो धर्मः धर्महन्तारं हन्ति । इति स्वयं मनुः प्राह—

धर्म एव हतो हन्ति धर्मो रक्षति रक्षित ।
तस्माद्धर्मो न हातव्यो मा नो धर्मो हतोऽवधीत् ।।

तस्मात् उतिष्ठत जाग्रत प्राप्यवरान् स्वधर्मं निबोधत इति श्रुतेराज्ञां पालयन्तो भयावहं परधर्मविधानमपहाय स्वधर्मानुष्ठाने भवन्तु भवन्त सावधाना इति अद्यापि धर्मशास्त्रमुद्घोषयति ।

यस्य धर्मस्य संस्थापनाय युगे युगेऽवतीर्णस्य भगवतश्चरणेनांकितेयं भारती तेन धर्मेण दूरीकृतनिखिलोपप्लवेऽस्मिन् भारते राष्ट्रे भव्यानां सदैव भव्यं विदधातु भूतभव्य भवत्प्रभुर्भूतभावनो भगवानिति ।

## 16

## धर्मशास्त्रस्यानुशासनम् ।

अथवा

**अक्षीणो वित्ततः क्षीणो वृत्ततस्तुहतोहतः ।** (1985)

अथवा

**धर्मेणहीनाः पशुभिः समानाः ।** (1986)

कीटपतङ्ग-पशु-पक्ष्यादियोनीर्लक्षणोऽतिक्रम्य मानवं जन्म लभते जन्तुः । अत्रायं प्राप्नोति स्वतन्त्रता-प्राप्त्यवरम्, स्वस्वरूप-भूतं परमानन्दं चाधिगन्तुम् । देवादियोनयोऽपि भोगयोनय एवेति दिव्यभोगासक्तमनस्कतया नास्ति तत्रापि परमकल्याणाय प्रयत्नमाचरितुं जन्तोरवसरः । मानवजन्मैवास्ति सर्वोत्तमोवसरो यत्र समस्तमपि कल्याणम्-अभ्युदयं निःश्रेयसं वा साधयितुं शक्यते, मानवो हि कर्मणि स्वतन्त्रः शुभमशुभं वा यथेच्छं कर्तुं पारयति । मानव एव च विधिनिषेधगोचरः सर्वाणि शास्त्राणि मानवमेवशासति । यथा—'इदं कुरु', 'इदं च मा कार्षीः' इति । तत्रायं साधु कृत्वाऽभ्युदयं निःश्रेयसं वाधिगन्तुं क्षमते, अन्यथा कृत्वा च नीचान्नीचतरं जडभावमपि प्रयाति । सर्वशास्त्रेषु च मूलभूतं मूर्धन्यतम शास्त्रं वेद, स एव च मानवकर्त्तव्यम—आचरणीयं सर्वतोभावेन शिक्षयति । अत एव च ब्रह्मचर्याश्रमे चतुर्विंशतिवर्षाणि यावद् ब्रह्मचर्यव्रत पालनपुरःसरं पुरा नियमेनाधीयते स्म वेद, येन मानवोऽयं कर्तव्यमाचरणीयं वाऽऽत्मनः सर्वतोभावेनाधिगच्छेत् । अनेकैः प्रकारैर्विविधैश्च विधिभिः सर्वं शिक्षयित्वाऽन्ते आचार्यकुलात् प्रतिनिवर्तमानं ब्रह्मचारिणं प्रति संक्षिप्य सर्वसारभूतोऽयमाचरणीयोपदेश आचार्यस्य यथा—वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति—'धर्मं चर' इति ।

अनुशासनमिदं धर्ममेव मानवमात्रस्य कृते एकमात्रमाचरणीयं प्रतिपादयति, सिद्धं चैतत् पुरुषार्थचतुष्टये धर्मार्थकाममोक्षाख्ये सर्वप्रथमो धर्म चरमश्च मोक्षः । मोक्षो हि मानवजीवनस्य परमं लक्ष्यं ध्येयं प्रापणीय वा, अयमेव पर्यायान्तरैः परमानन्द

ईश्वरप्राप्तिरात्मपदलाभश्चेति व्यवह्रियते। तस्यैतस्य परमपुरुषार्थस्य मानवजीवन-चरमलक्ष्यस्य मोक्षस्यैकमात्र साधनं धर्म एव। अर्थकामौ हि सर्वप्राणिसाधारणौ मध्यमौ पुरुषार्थौ, धर्मानुकूल्येन साधितौ च तौ न भवत प्रतिकूलौ परमपुरुषार्थसाधने, भवतश्च प्रत्युताऽनुकूलावेव। परमपुरुषार्थं मोक्षमधिगतवतो नावशिष्यते पुन. प्रापणीयं किञ्चिद्, तत्साधनतया धर्ममाचरतश्च नास्ति किमप्यन्यदाचरणीयम्, यदवशिष्येत। शब्दान्तरेषु—मोक्षमवाप्य 'नानवाप्तमवाप्तव्यम्' धर्मं च कृत्वा 'कर्तव्यं नावशिष्यते'।

साम्प्रतं च विचारणीयं कोऽयं धर्मो नामेति—'ध्रियतेऽनेन, धरति असौ' वेति धर्मपदनिर्वचनम्। 'धारणाद्धर्ममित्याहु' इतिशास्त्र—वचनं च। येन मानवो ध्रियते यो मानवं धरति स 'धर्म' इति। अर्थात् येन मानवो मानवोऽस्ति स धर्म, धर्म एव मानवता, मानवतैव च धर्मः। यदि मानवे मानवतैव नास्ति, तदा नास्ति स मानवः, धर्महीनो हि मानव. पशुर्मन्यते एव। आहारनिद्रादयस्तु भावा. पशौ मानवे च समाना। अस्ति खलु कश्चिद् विशिष्टो भाव यो हि मानवः पशोर्विशिनष्टि; सोऽयं धर्म एव, यस्य चेदं लक्षणं सर्वतोभद्रं सार्वभौमं च मान्येन मुनिना कणादेन वैशेषिक-दर्शने समुदघोषि—'यतोऽभ्युदयनिश्रेयससिद्धि स धर्म' इति। येनाचरणेन अभ्यु-दय—लौकिकपारलौकिक-सुखसमृद्धि लाभ; निःश्रेयसं = परमानन्दपदलाभश्च भवति स धर्म इति लक्षणसूत्रार्थ। अर्थकिं तत्कर्म आचरणं वा यद् अभ्युदयनि. श्रेयसयोः करणीभूतं स्यादिति चेत्-श्रुतिस्मृति-सदाचारात्मसन्तुष्टि प्राप्तमेव कर्म आचरणं वा तथेति गृहाण। उक्तं च धर्मे प्रमाणमुद्धोषिता धर्मशास्त्रेण—

"वेद स्मृति सदाचार स्वस्य च प्रियमात्मन।
एतच्चतुर्विध प्राहु साक्षाद्धर्मस्य लक्षणम्॥"

तत्र धर्मे मुख्यं प्रमाण वेद एव, वेदार्थमेव विशकलयन्ती स्मृति, तदुभय-समर्थितश्चाचार. तदनुकूलैव चात्मसन्तुष्टिर्धर्मे प्रमाणम्। तथा चोक्तम्—"धर्मं जिज्ञासामानानां प्रमाणं परमं श्रुतिः। तत एव च वेदविहितोऽर्थो धर्म इति धर्मलक्षणं करोति मीमांसाशास्त्रम्"। स चायं धर्मो दशाङ्ग संगृह्य प्रादर्शि मनुस्मृतौ—

धृति क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रह।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥

दशाङ्गोऽयं धर्मो विश्वजनीन सार्वभौमश्च। आर्यो वाऽनार्यो वा भारतीयो यूरोपीयो वा गौराङ्ग कृष्णाङ्गो वा यवनो वा यहूदी वा मानवशब्दभाक् प्राणी एतेन दशाङ्गेन धर्मेण यदि सम्पन्नस्तदा भवितुमर्हति स मानवः, नोचेन्न मानव इति शक्यते वक्तुम्। एषैव खलु मानवता, या तत्तत्सम्प्रदायाचार्यैर्यत्किञ्चिदन्तरेण पर्यायान्तरैः स्वस्वनियमेषु धर्मत्वेन प्रतिपादिता। आर्यशास्त्रेषु च समासव्यासाभ्यां क्वचिद् यम-नियमरूपेण, अन्यत्र सामान्यधर्मनाम्ना, अपरत्र सनातनधर्माभिधानेन वा प्रपञ्चिता। विचार्यतां च स्वयम्-धृतिक्षमाऽस्तेय-सत्य-शौचेन्द्रियनिग्रह-विद्यादिभिर्धर्मलक्षणैर्हीनोऽपि कश्चित्किं मानवो भवितुमर्हति? पर्यायान्तरे पशुरेव सः। तत्सिद्धमिदं धर्म एव मानवता मानवतैव च धर्म इति।

मानवो हि सामाजिकः प्राणी, समाजाश्रितं च तस्य जीवनम्। समाजश्च बुद्धिबलम्; बाहुबलम्; आर्थिकबलम्; शिल्पकलादिबलम् चाधारीकृत्य भवति साधु-संघटित, अतस्तदावश्यकतां पूरयति चातुर्वर्ण्यम्, बुद्धिबलप्रधानो ब्राह्मण, बाहुबल प्रधानः क्षत्रियः, आर्थिकबलप्रधानो वैश्य, शिल्पकलादिप्रधान शूद्र। तेषामेतेषां चतुर्णामपि वर्णानां समष्टि सुसंघटितो मानवसमाज एव विराट् पुरुषत्वेन समुपवर्ण्यते वेदे—'ब्राह्मणोऽस्य मुखमासीत् बाहू राज्यन्यकृतः। ऊरू तदस्य यद्वैश्य पदभ्यां शूद्रोऽजायत'।

वर्णानामेतेषां धर्मा अति स्वस्वभावानुसारं शास्त्रैरूपदिष्टा, वृतयश्च पृथगेवोपकल्पिताः। ससारे विद्यमान समस्तोऽपि मानवसमाज चतुर्षावर्णेषु विभक्त स्यात्, स्वस्वधर्मे च पूर्णतया तत्परो भवेत्, क. कं तदा किमितिपीडयेत् सर्वासमस्या स्वमेव समाहिता भवेयु।

एवं मानवीय-वैयक्तिकजीवनस्यापि समाजस्येव चत्वार एव कृता विभागा— ब्रह्मचर्यं, गार्हस्थ्यं, वानप्रस्थ्यं, संन्यासश्चेति यैरेतै परिपूर्णतां लभमाना मानवताऽन्ते परमपुरुषार्थं मोक्षमधिगच्छन्ती सम्पद्यते सफला। तत्र वीर्यविज्ञान-शौर्यादिलाभाय ब्रह्मचर्यम्, नैतिकजीवन-समाजसम्पर्कमर्यादितजागतकसुखभोगाप्तये गार्हस्थ्यम्, गृह परित्यज्याध्य मिकोन्नत्यै अत्युच्चसमाजसेवारूप-दैवसम्पत्सम्पादनार्थं च जप-तप-ईश्वर-भजनादिपुर सरं परमपुरुषार्थपथाग्रेसरणाय वानप्रस्थाश्रम, समग्रसांसारिकसुखेभ्यो विरज्य परमपुरुषार्थभूत परमानन्दप्राप्तये संन्यास, ते एते प्रत्येक चत्वारोऽपि वर्णाश्रम-धर्मा वैयक्तिकरूपे मानवतां परिपूर्य समष्टिरूपे समाजं च परिपोष्य मानवजीवन चरम-लक्ष्यं मोक्षमधिगमयन्ति। एवं चायं सामान्यविशेषादिभेदैरनेकतां गत एको धर्म एव समस्तकल्याणसाधनाय सवतोभावेन मानवैराचरणीय इति निश्चितं भवति।

वस्तुतो धर्म एव वैयक्तिकं सामाजिक लौकिकं परलौकिकं वा कल्याणं साधयितुं क्षमते। धर्माचरणेनैव शुद्धं जायतेऽन्तःकरणम्। येन पुरुषो देवो भूत्वा देवान् यष्टुमधिकारी भवति देवोपासनया च विविधानि लौकिकान्यलौकिकानि च सुखानि भुक्ते। अन्ते धर्माचरणद्वारा शुद्धान्तःकरण एव पुरुष परमानन्दं मोक्षमपि लभतेऽनायासम्। लोके सामाजिकी व्यवस्थापि धर्मेणैव कष्टमन्तरा सिद्धयति। यद्धि राजकीय-विधान सहस्त्रैरपि साधयितुं काठिन्येनांशत एव पार्यते तद्धर्मेणाऽनायासमेव साधयितुं शक्यते। धर्मस्यास्ति आदेश 'परद्रव्याणि लोष्ठवत्', मातृवत् परदारेषु', 'आत्मवत्सर्वभूतेषु'। अय खलु धर्म एव सर्वेषामुद्दण्डानां नियामक, किम्बहुना, उद्दण्डस्य राज्ञोऽपि नियामको धर्म एव। धर्म एव जगत प्रतिष्ठा, धार्मिक एव सर्वेषां पूज्य, धर्म एव सर्वेषां पापानां निवारक, सर्वं चेदं धर्मे प्रतिष्ठितम्, यथाहुस्तैत्तिरीया— "धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदन्ति, धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति।"

धर्म एव च ब्राह्मणस्य ब्राह्मणत्व स एव क्षत्रियस्य क्षत्रियत्वं, वैश्यस्य वैश्यत्वं शूद्रस्य शूद्रत्वं पुरुषस्य पुरुषत्वं स्त्रियः स्त्रीत्व च। किम्बहुना! सर्वेषामपि तत्वं धर्म

एव । धर्म विना मानवो नास्ति मानवः किन्तुदानवः । मणिहीनो नागो, दाहहीनो वह्निश्चन्द्रहीना निशा च यथा निस्सारा निश्शोभा च विद्यते तथैव धर्महीनो मानवः । सुखशान्तिमूलं धर्म एव यदा जगति धार्मिका भावा जागरिता अभूवन्, गेहे गेहे देशे राष्ट्रे विश्वस्मिन् विश्वे च तदासीत् शान्तेः साम्राज्यम् । वर्तमान युगीनास्तु सुधारकं मन्या नेतारो धर्म दूरतो निक्षिप्य सुखं शान्तिं च नीत्या साधयितुं कामयन्ते धर्मं चाभ्युदय साधने प्रत्युत् बाधकं मन्यन्ते, दयनीयाः खलु ते वराका यतो भ्रान्तास्ते धर्मस्य वास्तविकं तत्त्वमजानन्तः परम्परा प्रचलिताः काश्चिद् विकृता रूढीरेव धर्म मन्यमानाः सन्ति । समस्तानां सुखानां शान्तीनामन्ततः परमानन्द प्राप्तेरपि साधनं धर्म एव । धर्मे अविश्वासस्य पारस्परिककलहस्य प्रवञ्चनायाः प्रतारणस्य च कृते स्थानमेव नास्ति । धार्मिको हि मानवः सर्वान् सुहृद एव वाञ्छति ।

धर्म कस्मिन्नपि अत्याचारं कर्तुं नैव वाञ्छति प्रत्युत, सर्वत्रापि आत्मीयता-भावनामेव जागरितां द्रष्टुमभिलषति । अयं चास्ति धर्माचार्याणां डिण्डिमघोषः—

'श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ।।'

किन्न दृष्टमेतदितिहासग्रन्थेषु विपश्चिद्भिर्यत धर्मपरायणा व्यासवसिष्ठादयो महर्षयः, शुक वामदेव-प्रभृतयो विज्ञानिनः, जनकयुधिष्ठिरादयो राजर्षयश्च केवलस्य धर्मस्याश्रयेणैव समस्तमभ्युदयं निःश्रेयसं चाधिजग्मु । अहो धर्ममूर्तेर्मर्यादापुरुषोत्तमस्य भगवतः श्रीरामचन्द्रस्य धर्ममर्यादामये राज्ये कीदृशी परमा शान्तिर्बभूव, राजा वा प्रजा वा सर्वे सन्तुष्टाः प्रसन्नाः, नासीत् कोऽपि दु खी, असन्तुष्टो वा, अद्यापि शान्तिमयं तत् शासनं स्मरन्तो नरा रामराज्यमानेतुं कामयन्ते । धर्ममतिक्रम्य निर्मर्यादं प्रवर्त-मानानां महामहतामपि साम्राज्यानि धूलिधूलितानि बभूवः । प्रसंगेऽस्मिन् सत्यमेव कथितंकेनचित् सत्पुरुषेण—"ये पापमाश्रित्यसमुन्नतास्ते पतन्तिनूनं शिखराधिरूढा । हिटलर-मूसोलिनी—रावणानां निपात एवाऽत्र परं प्रमाणम् ।।" अतो धर्मनिष्ठत्व-मेवाऽस्माकजीवनं श्रेयस्करमिति कृतं संदेहेन ।

## 17

## सनातक-धर्माः । (1983)

अथवा

## चतुर्विधंप्राहुः साक्षाद्धर्मस्य लक्षणम् । (1983)

वेदशास्त्रप्रतिपादितं सम्यगाचरणं जनस्य कर्तव्य इति को न जानाति । आचारहीनं जनं देवा अपि पुनातु नैव शक्ता इति 'आचार हीनं न पुनन्ति देवाः' इति वाक्याद्विदितमेव । तस्मादाचारस्य पालनं सर्वदा करणीयम्, तथोक्तम्—

'श्रुतिस्मृत्युदितं सम्यग्नित्यमाचारमाचरेत'

यथा शरीरे बाल्यं, शैशवं वार्द्धक्यञ्चेति अवस्था चतुष्टयं प्रकृत्या भवति तथैव वैदिकमार्गमनुसृत्य मानवजीवनेऽपि स्मृतिकारैः चत्वार आश्रमा ब्रह्मचर्याश्रमपूर्वा निर्दिष्टाः। एषु समेषां मूलभूतो ब्रह्मचर्याश्रमः अयमेवाश्रमो जीवनस्य सुदृढतमः स्तम्भः। इममाश्रमं यश्च जनो यावत्सम्यक् यापयिष्यति तावानेव स पुरुषो दीर्घजीवो बलबुद्धिसम्पन्न आरोग्यवाँश्च भविष्यतीति निश्चप्रचम्। यस्य वस्तुनो निर्मितः प्रारम्भादेव दृढ़ा भवति तस्यायतिरपि दृढ़ा भवति। यश्च प्रथमत एव जीवने क्षीणतामादाय प्रवर्तते स जीवनस्यायतो कथमपि बलवीर्यसम्पन्नो भवितुं नैव शक्नोति। जीवनस्येमानि सूक्ष्माणि प्राकृतिकरहस्याण्यङ्गीकृत्य भारतीय साहित्ये संस्कृतौ च विद्याध्ययनसम्बन्धिनो नियमा उपनियमाश्च विज्ञानमन्विता सत्यशिवसुन्दरस्वरूपा-निर्दिष्टा येषामंशाशमात्ररूपेणैव स्वीकारात् मानवः यावज्जीवं सुखसम्पन्नो भवितुर्महति।

शिष्यक्षेत्रं गुरोर्विद्याबीजमादाय तदैव तद्बीजमंकुरितं पल्लवितं पुष्पितञ्च कर्तुं शक्नोति यदा स शीतलं निर्मलं मधुरं ब्रह्मचर्यसलिलं सञ्चयेत्। अत एव शास्त्रेषु विद्याध्ययनेन सह विद्यार्थी व्रतीभवेदिति निर्दिश्यते। तथा च वीर्यरक्षार्थं कृतो नियम एव ब्रह्मचर्यमस्ति।

शास्त्रेषु गुरु कुलुषु च निवसतां छात्राणां कृते ये नियमाः सन्ति समेऽपि ब्रह्मचर्यव्रतपालनपूर्वकं विद्याध्ययनायैव निर्दिष्टाः सन्ति, तद्यथासूर्योदयकालपर्यन्तं ये विद्यार्थिनः शेरते तेषां कृते शास्त्रःप्रायश्चितं विहितम्। स्मृतिषु च वर्णिनां कृते उपानद्धारणं, छत्रधारणं, गन्धमाल्यमधुमद्यमांसादिसेवनं, स्त्रीणामवलोकनं शृंगार चेष्टाः, पर्युषिताम्लादि भक्ष्याणि सर्वाणि वर्जितानि सन्ति। अस्य निषेधे इदमेव कारणं यज्जनः प्रागवस्थायामेव स्वात्मानं सुखादित्याग पुरस्सरं शीतवातातपसहिष्णु कुर्यात् येन जीवने कदापि विषमांवस्थायामपत्रायां स मनागपि द्वन्द्वाभिर्विचलितो न भवेत् इति। एतदर्थमेव विद्याग्रहणकाले ब्रह्मचर्येण सह बहव उपयोगिन नियमाश्छात्राणां कृते निर्दिष्टाः सन्ति। इत्थं व्रतसहितं विद्याभ्यासं समाप्य समंत्रं स्नात्वा शिक्षालयादनुज्ञामधिगम्य गृहस्थाश्रमे प्रवेष्टुमिच्छुको विद्यार्थी शास्त्रेषु स्नातकपदवाच्यो भवति।

यदा विद्याव्रतादिगुणैः समन्वितो ब्रह्मचारी गुरोः कुलाद् गृहमागच्छति तदा गृहागमनप्रयुक्तसंस्कारयुतमेव जनं स्नातकसंज्ञया बोधयन्ति। यतो हि कालेऽस्मिन् मन्त्रप्रयुक्तोऽभिषेकः क्रियते। इत्थं विद्यापूर्तिप्रयुक्तस्नानकरणादेव विद्यार्थी स्नातकपदेन बोध्यते। स्नातकोऽपि विद्यास्नातकः विद्याव्रतस्नातक इति त्रिधाभिद्यते। नियमपालन पुरस्सरं व्रतमपूरयित्वा केवलं ब्रह्मचर्यव्रतपालयन् यो विद्यां पूरयति स विद्यास्नातको भवति। व्रतं सनियमं पालयन्नपि विद्यापूर्णाङ्कर्तुं यो न पारयति स व्रतस्नातको भवति। विद्याव्रतं च य उभयमेव पूरयति स विद्याव्रतस्नातको भवति।

गृहस्थस्य समाजस्य देशस्य चाभ्युत्थानं तदैव संभाव्यते यदा तेषु वर्तमाना युवकाः सर्वविधया शिक्षया शिक्षिताः भवन्ति। सर्वविधा च शिक्षा तदैव लभ्या यदा

जीवनं सरलं नियमितं सात्विकगुणोपपन्नं स्यात् । गुरूणां कुलेषु विद्याया एव नियमो राजपुत्रेभ्य आदाय सर्वसाधारणजनानां पुत्राणां कृतेऽपि समान आसीत् । अस्याः शिक्षायाः एवैष प्रभाव आसीद यद् विद्याग्रहणकाले राजपुत्रेषु साधारणविद्यार्थिषु च मनागपि बाह्यभेदो नैव भवति स्म । सर्वेषां वेषभूषाभोजनादिक्रमश्च समान आसीत् । परस्परं सहानुभूतिः सर्वषु वर्ततेस्म । ईदृगादर्शस्यैवैष परिणामो यद् भगवतः श्रीकृष्णस्य सुदामा सदृशोऽकिञ्चनो सुहृत्तम आसीत् । तयोर्यादृग् विद्यार्थीजीवनं सममासीत्तदनुसारमेव तयोः पारस्परिकं प्रेम उत्तरे जीवनेऽपि अवर्तत इति केन न ज्ञायते । गुरुकुलवासे विद्यार्थी सद्गृहस्थे प्रवेशार्थं ब्रह्मचर्यादि नियमानां पालनपूर्वकं देशस्य समाजस्य जातेश्चोन्नत्यैः शारीरिकमानसिकबौद्धिकोन्नत्यै च स्वात्मानं योग्यं कुर्वन् सर्वदा यततेस्म । अस्यां दशायां स सामाजिकसांसारिकव्यवहारेभ्योऽनभिज्ञतया केवलं विद्याध्ययने एव संलग्नो वर्तते स्म । किन्तु यदा समग्रविद्यामभ्यस्य ब्रह्मचर्यादिनियम पालनतया शक्तिसम्पन्नो भूत्वा गृहस्थाश्रमे प्रविविक्षुः सन् जीवनक्षेत्रे प्रविशति तदा स शिरोवेष्टनोपानच्छत्रादि धारणाधिकारी भूत्वा सामाजिक वेषेण गार्हस्थ्यजीवनमभिलषति तदा आचार्यः समावर्तन संस्कारानन्तरं गृहगमनात प्राक् एनमेवमुपदिशति येनायं समाजस्य देशस्य च कार्येषु सर्वदा अग्रणी भवेत् ।

आचार्यस्यैते उपदेशा एतादृशा भवन्ति यैरुपदिष्टः स्नातकः जनसमूहेषु ग्रामेषु देशेषु शिष्टव्यवहारे च कदापि स्खलनं नैव विदन्ति । स्नातकमुद्दिस्य आचार्य मुखेभ्यो निसृतास्त उपदेशाः वेदेस्मृतौ धर्मग्रन्थेषु चोपलभ्यन्ते । तेषु कतिपये उपदेशास्तैत्तिरीयोपनिषदि विस्तृतरूपेण लभ्यन्ते । आचार्यप्रदत्तोपदेशाः श्रुत्यादिषु एवं विधा उक्ता, यथा—

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धमं चर । स्वाध्यायान्मा प्रमद । आचार्याय धनमाहृत्य प्रजातन्तुं माव्यवच्छोत्सीः । सत्यान्नप्रमदितव्ययम् । धर्मान्न प्रमदितव्ययम् । कुशलात्र प्रमदितव्यन् । भूत्यै न प्रमदितव्यम् । स्वाध्याय प्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्ययम् । मातृ देवो । पितृ देवो भव । आचार्य देवो भव । अतिथि देवो भव ।

स्नातको म्लेच्छवेषं न धारयेत्, मुखं विवृत्य सर्वेषां पुरो न हसेत् जृम्भेच्च अनयोः क्रिययोर्व्यवधानं कुर्यात् । मङ्गलकामो रात्रौ जल क्रीडां न कुर्यात्, यथोक्तं मार्कण्डेयेन—

स्त्रिया सह न भुञ्जीत, भुञ्जभानां क्षुभतीं जृम्भमाणां मुखमुपविष्टाञ्च नेक्षेत ।

स्नातकः सदा स्वाध्याय निरतः स्यात्, माला वस्त्राद्बहिर्न धारयेत्, पुष्पादिभिः सुगन्धिवान् विनयादिभिश्च प्रियदर्शनः स्यात् । द्रव्ये सति जीर्णं मलिनं वस्त्रं न धारेत्, रक्तमुल्बणं चापि वस्त्रं न प्रयोजयेत इति कूर्मे पुराणे वर्णितम् ।

वसिष्ठानुसारं स्नातकः स्वकीयमाहारविहारं निहारञ्च गोपयेत् । व्यर्थं नालपेत्, अशुभं न चित्तयेत् वित्तमायुषी च न प्रकटयेत् ।

याज्ञवल्क्येनोपदिष्टम्—यत् प्राणसंशयकारकं कृत्यं न कुर्यात् । अकारणं अकस्माच्चाप्रियं न ब्रूयात्, मिथ्या न वदेत्, अहितंनाचरेत्, तस्करकर्म न कुर्यात्, कुसीदं चापि न गृह्णीयात् । जले मलमूत्रनिष्ठीवनादिकं न त्यजेत्, हस्तयोरञ्जलिना च जलं पिबेत्, वृद्धान् स्वापात्र प्रबोधयेत्, अक्षैर्नदीव्येत्, रुग्णस्य धर्मधातकस्यान्तिकं नोपविशेत् ।

उत्तमैः पुरुषैर्नीचैश्च सह न कदापि विरुध्येत । विरोधो विवादो विवाहश्च समैरेव कार्यः सुधीः कलहं निरर्थकं वैरं च त्यजेत्, स्वीकार्यां हानिं लभमानोऽपि वैर पूर्विकां धनवृद्धिं परित्यजेत्, यथोक्तं विष्णुपुराणे—

विरोधं नोत्तमैगच्छेन्नाधमैश्च सदाबुधः ।
विवादश्च विवाहश्च तुल्यरूपैर्नृपेष्यते ॥
नारभेत कलिं प्राज्ञः शुष्कवैरञ्च वर्जयेत् ।
अप्यल्पहानिः सोढव्या वैरेणार्थागमं त्यजेत् ॥

इत्थमनेके उपदेशाः शास्त्रेषु स्नातकविषये निर्दिष्टाः स्वल्पव्यवहारेषु च स्नातकविहितेषु पूर्णतया विवेचनं कृतम्, एतादृशोपदेशयुता एव तरुणा प्राक् काले गुरोः कुलात्पठित्वा बहिः समागता एव गृहेषु, समाजे देशे च धर्ममुन्नमय्य संसारे नक्षत्रवत् प्रकाशन्ते स्म ।

भारतीयप्राचीन शिक्षया सम्बद्धाः प्राक् व्यवहृतिः सम्प्रति स्मृतिमात्ररूपेणै-वास्माकं पुरतोऽवशिष्टा न च क्वापि क्रियारूपेण प्राप्यते । न चाधुना गुरोः कुलानि न च गुरवः, आचार्याः स्नातकाश्च सन्ति । प्राचीनशिक्षायां केचन एतादृशाः सिद्धान्ताः विद्यन्ते स्म ये सर्वास्वपि शिक्षाऽप्रणालीषु सर्वं दैव लाभप्रदा भवितुं शक्नुवन्ति । ते च सन्ति स्नातकान्तप्रति गमनकाले उपदेशाः ये चाधुनापि विश्वविद्यालयेषु कन्वोकेश-नावसरे कस्मिन्नपि रूपे दृश्यन्ते एवं प्रत्येकोऽपि विश्वविद्यालय उपाधिप्रदानकाले उपदिशति छात्रान् । इत्थमेवाचार्या प्राक् कालेऽपि स्नातकान् संसारे गन्तुकामान्, उपदिशन्ति स्म । उभयोरप्युपदेशयोः पर्याप्तं प्राप्यते साम्यम्, यथा—"असत्यं मा वद, सत्यं वद, स्वालम्बीभूयाः स्वाध्यायः सदाकरणीयः, स्वात्मानमावमंस्थाः, देशस्य जातेर्धर्मस्य च रक्षा विधातव्या, कर्तव्य करणीयः, गुरोराचार्यस्य शिक्षालयानाञ्च विस्मरणं न कार्यम् अपितु एते सर्वदा सेव्याः इत्यादि बहुविधोपदेशस्तथैव सम्प्रत्यपि प्रदीयत एव यथा प्राक्काले । एषु पूर्वोपदेशेषु 'श्रद्धयादेयम्, ह्रिया देयम्' इत्यादि-वाक्यान्यपि सन्ति ।

स्नातकानामेष परमः कर्तव्य अस्ति यद् यत्र तै शिक्षालब्धा तेषां शिक्षालयानां ते यावज्जीवं सेवायै तत्पराभवेयुरिति । अद्यापि स्नातकस्तादृश एव व्यवहारोऽपेक्ष्यते । शिक्षाप्रदायिकानां शिक्षासंस्थानां ते स्वजीवने कदापि मा विस्मरेयुरिति तेषां प्रमुखः कर्तव्य । देशस्य जातेः, धर्मस्य च ते सर्वदा रक्षणं कुर्युः प्राचीनभारतीयमर्यादाञ्च पालयेयुरित्येव शास्त्राणामाचार्याणाञ्चोपदेशः ।

## 18
## भारतीयसंस्कृतौ संस्काराः ।

व्यक्तित्वस्य विकसनमेव संस्कृतिः । संस्कृतेः समारम्भो भारते प्रारम्भ एव संस्कारेभ्यो भवति । यत्कञ्चिदपि प्रागाकलितं विकाससौरभ्यं मानवतायां विद्यते, तस्य भावेन भावनमेव संस्कारः । संस्कारेणैव शिशौ मानवतायाः प्रथमोद्बोधो भवति । गर्भाधानात् प्रभृति मरणपर्यन्तं संस्कारविधिना पुरुषस्य शरीरतः मनसश्च शुद्धिर्जायते समक्षं च तस्य भाविजीवनस्योत्थानमयी परम्पराविष्क्रियते । व्यक्तित्वस्य विकासाय तत्सम्बन्धितत्त्वानुशीलनम्, उपदेशश्रवणम्, गुरुजनानां वैदिकमन्त्रैः शुभाशंसा चावश्यमेव प्रभावोत्पादकानीति भारतीयानां धारणा ।

एषु संस्कारेषु षोडश एव प्रायशो धर्म-ग्रन्थेषु संगृहीताः । तेषां प्रमुखसंस्काराणां नामानि गर्भाधान-पुंसवन-सीमन्तोन्नयन-विष्णुबलि-जातकर्म-नामकरण-निष्क्रमणान्न-प्राशन-चौलोपनयन-चतुर्वेदव्रत-समापवर्तनविवाहाः सन्ति । व्यक्तित्वस्य विकासदृष्ट्या ब्रह्मचर्यमतिशयं महत्त्वपूर्णं विद्यते । ब्रह्मचर्यस्यारम्भ उपनयनविधेरनन्तरं भवति । प्रायशः संस्काराः शैशवे सम्पाद्यन्ते ।

संस्काराणां सर्वजनीनत्वं प्रत्यक्षमेव वर्तते । शूद्राणां स्त्रीणां च संस्कारा मन्त्रविहीनाः कृता । प्राचीनयुगे संस्कारा अपरिहार्या आसन् । अकृतसंस्कारा जना जातच्युताश्चाण्डालशूद्राणां समकक्षत्वं प्राप्ताश्चेति प्रमाणितम् । उपनयनं तु द्वितीयं जन्मैव येनार्यो द्विजो भवति ।

प्राचीनयुगे पितॄणामत्यधिका चिन्ता पुत्रस्य व्यक्तित्वविकासनाय बभूव । 'आत्मा वै जायते पुत्रः' इति शास्त्रवचनानुसारं पितास्वयमेव पुत्ररूपेणजायते । अस्यां दशायां पिता स्वकीयाभावानपि पुत्रसमृद्ध्या परिपूर्यात्मानं बहु मन्यते स्म । प्राचीनयुगस्य धर्म-परायणतापि संस्कारं सर्वजनग्राह्यं विदधाति स्म ।

अत्र प्रमुखसंस्काराणां संक्षेपतः वर्णनं क्रियते—

**गर्भाधानम्—**

शिशोर्मातुर्गर्भे बीजरूपेण प्रतिष्ठापनं हि गर्भाधानम् । वैदिककालेऽस्मिन्नवसरे विष्णु-त्वष्ट्र-प्रजापति-सरस्वतीनां स्तवनं कृतम् । बृहदारण्यकोपनिषदि विशिष्टगुणैः समन्वितान् पुत्रान् प्राप्तुं विशिष्टभोजनानां विधानं वर्तते । परवर्तियुगे गर्भाधानाय तिथीनां नक्षत्राणां च शुभाशुभत्वं पर्यालोचितम् । विज्ञानसम्मतं प्रतिभाति विधान-मिदम् ।

मातुः पितुश्चोदात्त विचाराणां संकल्पनम्, तेजस्विपुत्रप्राप्तिकामना, दिव्य-शक्तीनां सान्निध्यं चास्य संस्कारस्य वैशिष्ट्यानि ।

**पुंसवनम्—**

गर्भस्थशिशोः पुत्रत्वं विधातुं पुंसवनं क्रियते । प्रथमं तावत् देवानां स्तुतयः कृताः, तेभ्यश्च देवेभ्यः पुत्रप्राप्तये वरो याचितः । अस्मिन्नवसरे गर्भरक्षणार्थं पुत्रोत्पत्तये

चायुर्वेदोक्तौषधीनां प्रयोगश्च कृतः। वैष्णवसंस्कृतौ पुंसवनार्थं वर्षपर्यन्तं विष्णोः स्तुतिः तस्याराधना पूजा च कर्तव्या इति विहितम्।

**सीमन्तोन्नयनम्**—

सीमन्तोन्नयनमुत्सवप्रायमभवत्। संस्कारेऽस्मिन् पतिः पत्न्या केशपासमलंकुर्वन् तस्मिन् सीमन्तमरचयत्। गौणतो गर्भभारक्लान्ता माता प्रमोदिताभूत्। वैदिकयुगे सीमन्तोन्नयनावसरे वीणागाथिनो वीणावाद्यपूर्वकं सोमराजस्य स्तुतिमकुर्वन्। सीमन्तोन्नयनं गर्भाधानात् चतुर्थे मासे सम्पादितम्, यदा शुक्लपक्षे पुंसा नक्षत्रेण चन्द्रमायुक्तोऽभवत्।

**विष्णुबलिः**—

गर्भाधानादष्टमे मासे विष्णुबलिसंस्कारेण विष्णवे चतुष्षष्टिबलयः समर्पिता वैदिकसूक्तैश्च तस्य देवस्य स्तुतिः कृताः। प्रभावेणास्य संस्कारस्य गर्भस्थशिशोः संरक्षणं निरापद् प्रसूतिश्चामन्येताम्।

**जातकर्म**—

शिशौ जाते महान् हर्षो जायते। प्रथमं तावत् वैश्वानरस्य परितुष्टिः सम्पाद्यते। नाभिवर्धनात्प्रागेव पंचभिर्ब्राह्मणैः शिशोरनुप्राणनमक्रियत। अनेन विधानेन तस्य पूर्णजीवनस्याभ्युदयस्य चाशा सम्भाविता। ब्राह्मणानां संसर्गो रहस्यविधिना शिशोर्ब्राह्मणत्वविधायक इति धारणासीत्।

आश्वलायनानुसारं दधिमधुभृतं प्राशयन् पिता शिशवे शतवर्षाणां पूर्णायुरकामयत। ततः शिशोर्मेधाजननं कुर्वन् तस्यश्रवणसमीप मुखमानीयागायत्—

मेधां त्वे देवः सविता मेधां देवी सरस्वती।
मेधां त्वे अश्विनौ देवावाधत्तां पुष्करस्त्रजौ॥

**नामकरणम्**—

नाम्नोऽतिमहत्त्वमिति विदितं सर्वेषाम्। नाम्नो महत्त्वमधिकृत्य बृहदारण्यकोपनिषदि संवादो यं प्राप्यते—

"यत्रायं पुरुषो म्रियते किमेनं न जहातीति। नामेत्यनन्तं वै नामानन्ता विश्वदेवा अनन्तमेव स तेन लोकं जयति।"

जातकर्मसंस्कारे गुह्यं नाम कृतम्। जन्मनो दशमे द्वादशे वा दिने पुण्ये मुहुर्त्ते नक्षत्रे वा सर्वजनप्रकाशनीय नामाक्रियत।

बृहस्पतिमतं नामाधिकृत्य प्रमाणितम्—

नामाखिलस्य व्यवहारहेतुः शुभावहं कर्मसु भाग्यहेतुः।
नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म॥

**निष्क्रमणम्**—

जन्मनश्चतुर्थे मासे शिशोर्गृहान्निष्क्रमणमभवत्। निष्क्रमणदिवसे तत्र सूर्यस्य दर्शनं प्रथमं विधातव्यम्। सूर्यस्तु भारतीयदृष्ट्या ज्ञानविज्ञानयोः परमं निधानमेव।

आचार्य एव सूर्य सविता वा दिव्यज्ञानाय । रात्रौ निष्क्रमणविधौ चन्द्रदर्शनं कर्तव्यम् । एताषां दिव्यविभूतीनां दर्शनस्य शिशोः सर्वतः संवर्धने हितकरः प्रभावो भवति ।

**अन्नप्राशनम्** —

शिशोर्जन्मकाले दधिमधुघृतानां प्राशनमभूत् । पश्चात् शिशोः षष्ठमासेऽन्न-प्राशनं कृतम् । आयुर्वेदानुसारं लघुहितमन्नं शिशवे दातव्यम् । अन्नस्य न केवलं जीवन-धारणायैव महत्त्वमपितु व्यक्तित्व विकासायान्नस्योपयोगिताभिमता ।

भारतीयधारणानुसारमन्नं देवतारूपं वर्तते । अस्मिन् संस्कारे पदे पदेऽन्नदेवस्य स्तुतिर्विहिता ।

**चूडाकरणम्**—

चूडाकरणं शिशोः प्रथमेऽब्दे तृतीये वा सम्पादितम् । केशानां कर्तनं विधाय शिरसि चूडा कृता । केशकर्तनस्य लाभा आयुर्वेदानुसारं सन्ति । यथा—

"पापोपशमनं केशनखरोमापमार्जनम् ।
हर्षलाघवसौभाग्यकरमुत्साहवर्धनम् ॥"
"केशश्मश्रु नखादीनां कर्तनं संप्रसाधनम् ।"

चूडाकरणात्प्रभृति शिखाग्रहणं भवति ।

**उपनयनम्** —

आचार्येण ब्रह्मविद्याया अध्यापनाय विद्यार्थिनः शिष्यभावेन स्वीकरणमुप-नयनम् । ततः पंचविंशतिवर्षपर्यन्तं ब्रह्मचर्याश्रमस्य विधानम् । पितास्वयमेव स्वपुत्रमा-चार्यसमीपं नीत्वा तस्योपनयनाय प्रार्थयति । वैदिककाले विद्यार्थी स्वयमेवाचार्यसमीपं गत्वान्यवेदयत्-ब्रह्मचर्य-मागामिति ।

परिवर्तियुगे विस्तृतोपनयनविधेः प्रमुखांगान्यधोलिखितानि—विद्यार्थिन उत्तरीयवासोधारणम, मुण्डनम्, मेखलादण्डधारणम्, हवनम्, समिदाधानम् सावित्री-शिक्षणं च । वैदिककाले विद्यार्थिनीनां कन्यकानामुपनयनविधानं सुप्रचलितमासीत् । ईदृशीनां कन्यकानां संख्या तदानीमपि निःसंशयमेव नासीदधिका ।

**समावर्तनम्**—

आचार्याश्रमेऽध्ययनं परिसमाप्य प्रायशो विद्यार्थिनः स्वगृहमागच्छन् । आश्रमाद् गृहागमनं समापवर्तनम् अस्मिन्नवसरे । समावर्तन संस्कारसम्पादितः । समावर्तनसंस्कारे विद्यासम्पन्नस्य ब्रह्मचारिणो विधिवत्स्नानमभूत् समावर्तनसम्बन्धि स्नानमिदं कृत्वैव स स्नातकोऽभवत् । समावर्तनमनु स्नातकस्य गृहस्थाश्रमपरिपालनाय गृहिण्या अपेक्षा-भूत् । सा तु विवाहसंस्कारेण लभ्यासीत् ।

**विवाहः**—

विवाहस्तु सन्तानकामाय, प्राकृतिकसुखाय, धर्मसम्पादनाय चाभवत् । संस्कार-स्यास्य सातिशयं महत्त्वमस्ति ।

पुरा विवाहस्याष्ट भेदा आसन्—ब्राह्मः, दैवः, आर्षः, प्राजापत्यः, आसुरः, गान्धर्वः, राक्षसः, पैशाचश्च । एष्वष्टवर्गेषु चत्वार आद्या आर्या बभूवुः । अपरे आर्येतरा आसन् ।

सज्जीवनयापनाय समुपवर्णिताश्च ये कतिपयप्रमुखसंस्कारा न केवलं भारतीयानां कृते धर्मार्थकाममोक्षप्रदायकाः, किन्तु निखिलजगति जीवनसरणौ लोकोपकारका इति कृतं सन्देहेन। अपरे शेषास्तु ये नात्र समुवर्णिता संस्कारास्ते तु मृत्युपर्यन्तमवलम्बनीयत्वात् नाऽस्माभिर्विवेचिताः इति कृत्वा विरम्यते मयका।

## 19

## मलमासः, तद्वर्ज्यानि।

अथवा

## मलमासः। (1982)

प्रवृत्तिरेषाभूतानां निवृत्तिस्तु महाफला इति वचने प्रवृत्तिनिवृत्तिनिर्णायकं शास्त्रं धर्मशास्त्रम्। कालनिर्णये कार्याकार्यविवेचने चास्य महती समुपादेयता वर्तते। किमपि शुभं कार्यं धर्मशासकानामनुमतिं विना निष्पादितं न श्रेयस्कराय प्रभवति। धर्मशास्त्रे मलमासस्य निन्दनीयत्वं निर्दिष्टम्, नात्र किंचिदपि शुभकार्यं विधीयते। कोऽयं मलमास इति जिज्ञासायम्—

यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव च।
मलमासः स विज्ञेयो मासः स्यात्तु त्रयोदशः॥

न संक्रान्तिरित्यनेनाधिमासस्य ग्रहणम्। मलमासमधिकृत्य सत्यव्रतोऽपि—

राशिद्वयं यत्र मासे संक्रमेत दिवाकरः।
नाधिमासो भवेदेष मलमासस्तु केवलम्॥

अयञ्च मासश्चान्द्र एव। अतश्च यत्रामावस्याद्वयमध्ये संक्रान्तिर्नस्यात्, संक्रान्तिद्वयं वा भवेत् स मलमासो भवतीति कारिकार्थः। अस्यैवमलिम्लुच इत्यपि संज्ञा प्रसिद्धावर्तते। तदुक्तञ्च—

रविणा लंघितो मासश्चान्द्रः ख्यातो मलिम्लुचः।

अत्रकारिकायां चान्द्रोऽपि शुक्रप्रति पदादिरेवविवेचितम्, अस्मिन् प्रसंगे लघुहारीतेन्—

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः।
अग्निसोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥
तमतिक्रम्य तु यदा रविर्गच्छेत्कदाचन।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः॥

मालमासस्य पापमयत्वं निन्दनीयत्वञ्च प्रत्यपादि धर्मशास्त्राचार्यैः। अयञ्च मासः सर्वकर्मणां कृते पापमयत्वेनवर्ज्योवर्तते। यथा विष्णुधर्मोत्तरेग्रन्थकारेण—

सौरेणाब्दस्तु मासेन यदा भवति भार्गवा।
सावने तु तदा माने दिन षट्कं न पूर्यते॥

दिनरात्र्याश्च ते राम प्रोक्ताः संवत्सरेण षट् ।
सौर संवत्सरान्ते मानेन शशिजेन तु ॥
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ॥
समामासे साष्टमासे तस्मान्मासोऽतिरिच्यते ।
स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः ॥

एवमेवास्य मासस्य मन्द प्रयोजनत्वेन नपुंसकत्वमपि प्रतिपादितम् । यतोहि यथा नपुंसको न कदाचिदपि सन्तानोत्पादने कयारीत्यासमर्थो भवितुमर्हति एवमेव अस्मिन्मलमासे कृता धार्मिकी प्रक्रिया सर्वथाफलशून्येति तस्य नपुंसकत्वंसंसाधितम् ।

**ज्योतिः शास्त्रे—**

असक्रान्तोहि यो मास कदाचित् तिथिवृद्धितः ।
कालान्तरात्समायाति स नपुंसक उच्यते ॥

अस्य मलमासस्य मलिम्लुंचत्वाभिधानं कर्मफलचौरैः राक्षसादिभिराक्रान्तत्वात् मलिम्लुचंविजानीयात् गर्हितं सर्वकर्मसु इत्यनेन नामान्तरगतस्यापितस्य निन्दनीयत्वम् । मलमासे वर्ज्यावर्ज्यनिर्णयः—

**यथा सत्यव्रतेन—**

मलिम्लुचस्तु यो मास समासः पापसंज्ञितः ।
वर्जितः पितृदेवाभ्यां सर्वकर्मसु तं त्यजेत् ॥

**शातातपः—**

वत्सरान्तरगतः पापो यज्ञानां फलनाशकृत् + एतेन स्पष्टतयैवात्रविवेचितं यदत्र मलमासे निष्पादितोयागादिः निष्फलो जायते । अत एव कालमाधवेनाचार्येण विवेचितं यत् कस्यापि कर्मण समीचीनत्वं धर्मशास्त्ररीत्याविवेचनीयम् । तदनन्तरं कृतस्य कार्यस्य फलप्राप्तिः शुभावहा भवति नान्यथा ।

**पैठिनतिः—**

श्रौतस्मार्तक्रियाः सर्वा द्वादशे मासे कीर्तिताः ।
त्रयोदशे तु सर्वास्ता निष्फला इति कीर्तिताः ॥
तस्मात् त्रयोदशे मासे कुर्यास्ता न कथञ्चन ।
कुर्वन्ननर्थमेवाशु कुर्यादात्मविनाशनम् ॥

अत्र त्रयोदशस्वञ्च संक्रान्तियुक्तप्राकृतद्वादशमासापेक्षया कुर्यादात्मविनाशनमित्यनेन सर्वथा निषिद्धमिति पर्यालोचितम् । अत्र निष्फला इत्यमिधानात् फलकामनया प्रवृतं कर्म निषिध्यते, यानि नित्यानि कार्याणि सन्ति तेषामनुष्ठानन्तु मलमासेन न निषिध्यते । नित्यकर्मणां संध्योपासनानां अनाचरणे प्रत्यवायो भवतीत्यपि अनेन संसाधितम् ।

मलमासे काम्यकर्मवर्ज्यं हि स्मृत्यन्तरेष्वपि यथा—

इष्टादिसर्वकाम्यं हि मलमासे विवर्जयेत् ।

यद्यपि पूर्वप्रतिपादनेन मलमासे सर्वकर्मणः निषेधो निरूपितः, अत्र च काम्य-कर्मण एव निषेधनीयमिति कथं निर्णय इति शंकनीयम् ।

अन्ते— मुक्त्या नैमित्तिकं नित्यं इत्यादिना समाहितम् ।

**एवमेवकाठकेन—**

अनन्यगतिकं नित्यं कुर्यान्नैमित्तिकं तथा इतिस्मृत्या, मलेऽनन्यगत्ति नित्यां कुर्यान्नैमित्तिकीं क्रियाम् । इति काठकवचनाच्च । अनन्य गतिदशाप्राप्तस्य कर्मणो न निषेधः ।

**तत्र कारणम्—**

अनन्यगतिकं च यस्य नित्यस्य मुख्यकालातिक्रमे जघन्यस्य कालान्तरस्य अननुज्ञातत्वात् अत्यन्तलोपे प्रायश्चित्तं प्रसज्यते तत् । मालमासे काम्यनिषेधोऽपि आरम्भ-समाप्तिविषय एव, न तु मध्यत्वाक्रान्तकाले । अत एव ब्राह्मसिद्धान्तः—

असूया नाम ये मासा न तेषु मम सम्मतः ।
वृतानाञ्चैव यज्ञानामारंभश्च समापनम् ।।

प्रारब्धा परिसमाप्तं तु काम्यं कर्म मलसासेऽपि भवत्येव, यथा तत्रैव—'प्रारब्धं कर्म यत् किञ्चित् तत्तु कार्यं मलिम्लुचे ।' एवमेव मरीचि—'रोगे चालम्पयोगे च सीमन्ते पुंसवने तथा । यद्दानादिसमुदिष्टं पूर्वन्नापि न दूष्यति ।' पूर्वन्नापीत्यस्य मल-माऽसेपि इत्यर्थो बोधव्यः ।

**एवमेव स्मृतिसंग्रहे—**

जातकर्म प्रसूतिश्च सोमन्तोन्नयनं व्रतम् ।
मलिम्लुचेऽपि कुर्वीत निमित्तं यदिजायते ।।

व्रतशब्देन अलम्पयोगादिनिनिमित्तक व्रतानामावश्यक प्रायश्चित्तरूपकृच्छ्रचान्द्रा-यणादीनां ग्रहणम् । श्राद्धकार्यस्यानिवार्यत्वं विवेचयता स्मृतिकारेण तत्कारणं मलमासस्य न प्रतिबन्धकत्वमितिविवेचितम्, यथा—

श्राद्धतातकनामानि—ये संस्कार संवृत्ताः ।
मलिम्लुचेऽपि कर्तव्या इष्टीकाम्यांश्च वर्जयेत् ।।

अत्र संस्कारशब्देन अन्नप्राशननिष्क्रमणाः विवक्षिताः। जनार्दनशयनादारभ्योत्थानं यावत् धृत्वाग्निं धारणपारणादिकं करिष्यामीति संकल्पसंहिताः सव्रताः काम्या अपि । इष्टिग्रहणं काम्यपशुबन्धादिकर्मोपलक्षम् । सर्वेषामपि काम्यानामनावश्यकत्वेन वर्जनी-यत्वात् । यज्ञोपवीतसंस्कारस्य वर्जनीयत्वं विवेचितम्—

अस्तं गते गुरौ शुक्रे वृद्धे बाले मलिम्लुचे ।
व्रतारंभापवर्गञ्च न कुर्यात् मौञ्जिबन्धनम् ।।

पराशरेण प्रतिष्ठादिकर्मणामपि मलमासे वर्ज्यत्वं समादिष्टम्, यथा—

आग्न्याधेयं प्रतिष्ठा च यज्ञदान व्रतानि च ।
वेदव्रतवृषोत्सर्गः चूडाकरणमेव च ।।
माङ्गल्यमभिवेकञ्च मलमासे विबर्जयेत् ।।

अस्यापवादो दृश्यते शास्त्रेषु—

चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षय्यकारणम् ॥

## 20
## धर्मशास्त्रानुसारेण दायभागः।
## (सम्पत्ति विभाजनम्)

दायशब्दो हि प्राचीन वैदिक साहित्येऽपि प्रयुज्यमानो दृश्यते। यथाहि, प्राचीनतमे ऋग्वेदे—'ददातु वीरं शतदायमुक्थ्यम्' । अत्र शतदायशब्दस्य प्रयोगः प्रभृतभावेऽर्थे सायणाचार्येण प्रयुक्तः । लोके व्यवहारप्रचलितवसीयतस्यार्थे तेषामभिप्रायः । ऋग्वेदस्य 'यस्यदायं विभजन्त्येभ्यः' (10/114/10) अस्मिन् मंत्रे दायशब्द प्रयोगो भागेऽर्थे प्रयुक्त इति सम्भाव्यते । तैत्तिरीय सहितायां, ब्राह्मणग्रन्थेषु च दायशब्दस्य पैतृकसम्पत्ति इत्यर्थः कृतो वर्तते । नामानेदिष्टस्य गाथायां समायाति यत् मनुना स्वकीयो दायः पुत्रेभ्यः प्रदात्, अत्रदायशब्देन धनं दायशब्दस्यार्थ इति प्रतीयते । ताण्ड्यब्राह्मणस्य मन्त्रेषु समुपवर्णितो वर्तते पुत्रास्ते एव भवन्तिये धनस्याधिकभागं श्रेष्ठतमं भागं स्वीकुर्वन्ति । यथा—

'तस्यधः पुत्राणां दायं धनतममिवोपैति तं मन्यन्ते यमेवेदं भविष्यतीति'
(96–413–4)

सूत्रग्रन्थेषु स्मृतिषु च दायशब्दार्थक रिक्थशब्दोऽपि प्रायुक्तः । यथा अत्र ऋग्वेदस्य मंत्रे—

"न जामये तान्वो रिक्थभारैक् चकारगर्भं सवितुर्निधानम् ।"
(ऋग्वेद 3–31–1)

अथर्ववेदे—"न ब्राह्मणो हिंसितव्योग्निः प्रयतनोरिव । सोमो ह्यस्य दायादः इन्द्रो अस्याभिशक्तिपाः ॥" (अथर्ववेदे 5–18–6)

अत्र मंत्रे सोमरस पाने ब्राह्मणानां भाग आसीदिति सोमपानस्य निष्पत्तिः कया रीत्या भवतीतिपिंगक्ष्यैकदायन्या सोमं क्रीणाति इत्यनेनान्यत्र ग्रन्थेषु विवेचिता । दायदानशब्दयोर्मध्ये धातुसाम्येऽपि अर्थे महान् विक्षेपोवर्तते । दानशब्दस्यकस्मिन्नपि वस्तुनि सम्प्राप्त स्वतःपरित्यागः, तस्मिन्नेवान्यस्य कस्यापि अधिकारकरणमेवार्थः । अतो दा धातु विवेचनप्रसंगे—स्वस्वत्वनिवृत्तिपूर्वकपरसत्वोत्पादनमेव दाधात्वर्थ इति समालोचितं व्याकरणे दायशब्दार्थश्च—कश्चन दिवंगतो मानवः कस्याप्यन्यस्य स्वामित्वोपपादनाय स्वस्य स्वत्वं त्यजति । एवं विधार्थभेदेऽपिदान दायादशब्दोः स्वामित्वभागाङ्गो उभयत्र विद्यते एतदेवानयो साम्यम् । एतदेव विचारितं शास्त्रकारैः—"दीयते इति व्युत्पत्या दायशब्दो ददाति प्रयोगश्च गौणः मृत प्रव्रजातादिवस्तुसत्व

निवृत्तिपूर्वकं परस्वत्वोत्पत्तिफलसाम्यात्। न तु मृतादीनां तत्र त्यागोस्ति। ततश्च पूर्वस्वामिसम्बन्धाधीन तत्स्वाम्योपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढो क्षयशब्दः।"

(दायभागः 1–4–5)

दायस्य भेदद्वयं वर्तते—अप्रतिन्धात्मोदायः, सप्रतिबन्धात्मकश्च। प्रथम भेदे — पुत्रपौत्रप्रपौत्राः स्वकीयेन सहजसम्बन्धेनैव पितृपितामह प्रपितामहादीनां वंशपरम्परया प्राप्तं धनं गृहीतुं अधिकारप्राप्ताः सन्ति, अत्र पितामहादीनां अभिरुचि उपस्थितिर्वा न अपेक्षते, स्वत एव अधिकारप्राप्ति भवत्येव। न कश्चन तेषां धनप्राप्तिकरणे प्रतिबन्धो वर्तते, अतएवास्याभिधानमप्रतिबन्धो इति प्रथितं वर्तते। परञ्चस्वपितृव्ये मृते अथवा संतानहीने स्वस्यकुलीने मृते सति यद् धनाधिकं केनापि कृताधिकारेण प्राप्यते स दाय भागः सप्रतिबन्धात्मको वर्तते, यतो हि स्वकीय पुत्राभावे केनापि कुलजातेन तत्राधिकारं प्रकटयितुं शक्यते, अतोऽस्मिन् दायभागे शत्रुकृतप्रतिबन्धस्य विद्यमानत्वेन अस्य नाम सप्रतिबन्धात्मकदाय इत्यभिधानमन्वर्थं विद्यते।

मिताक्षरायां दायभागोऽयं विशेषेणनिरूपितो वर्तते, मिताक्षराकारेण स्वत्व-स्यार्थो न केवलं शास्त्रीय एव गृहीतव्यः, सामान्येऽर्थेऽपि अस्य प्रयोगो विधेयः यथा-तण्डुलानि भौतिकोपयोगस्य साधनानि वर्तन्ते, तेनैवप्रकारेण स्वत्वस्यापि साधारणा-दानप्रदानविषयेऽर्थे उपयोगोविधेय इतितेषां तर्कः। आहवनीयअग्नेः समुपयोगः शास्त्रीयकार्ये एव भवति न तु लौकिक कार्येषु। तन्दुलौदननिर्माणाय आहवनीयाग्ने. समुपयोगः कर्तुं शक्यते। शास्त्रज्ञानशून्येषुम्लेच्छेषु क्रमेण प्राप्ते दायभागे स्वामित्वाधि-कास्य धारणा नितरां प्रसिद्धावर्तते।

अयमिभ्रायो वर्तते—स्वामित्वप्राप्तिसाधनविषयकानां भावानां न केवलं शास्त्रादेवोद्गमो जातः, परञ्च मानवनां धारणा अति प्राचीनतमेयं व्यवस्था वर्तते। केवलं शास्त्रकारैः व्यवस्थेयं विशेषेण सुव्यवस्थिता कृता। अत एव गौत्तमस्मृतौ दायादविभागविवेचनप्रसङ्गे दायभागोऽयमौचित्यसीमया प्रतिबद्धः कृतो दरीदृश्यते। तत्र पञ्च सर्वेषां कृते समानानि सन्ति दायञ्च केवलं ब्राह्मणानां कृते नियतं वर्तते। अस्मिन् रूपे व्यवस्थेयं पाणिनीया वर्तते। भगवता पाणिनिना न नवीनशब्दाः प्रणीताः न च तेषामुत्पत्तिःकृता, यतोहि पाणिनिमते शब्दस्य नित्यत्वेनोत्पादविनाशाभावात्, एवञ्च केवलं पाणिनिना एतदेव कृतं यत् भाषायां प्रयोक्तृभिः प्रयुक्ता शब्दा कया रीत्या साधुत्व विशिष्टा इत्येव विवेचितम्, एवमेव दायभागेऽपिलोकपरम्परामाश्रित्वेव व्यवस्था विधेयेति मिताक्षराणां मतं विद्यते।

अनेकैर्विद्वद्भिस्तर्कोऽयं प्रस्तूयते यदेषा स्वामित्व निर्धारणा न शास्त्रीया अपितु लौकिका वर्तते, अर्थादियं व्यवस्था सांसारिकप्रयोगमनुसृत्यैव प्रचाल्यते, अत एव इमां लोकसिद्धां व्यवस्थां प्रतिपादयन्ति नवीनाचार्याः। सर्वसाधारणस्य कृते इयं धारणां यत् पुत्रो जन्मत एव स्वस्य पितृधनस्याधिकारीति। एतदतिरिक्तमत्र गौत्तमवचनमपि प्रामाणिकम्। आचार्यवरैस्समुद्घोषितं यत् य कश्चनोऽपि स्वामित्वं जन्मत एव प्राप्यते। अत्र गौतमवचने अन्येषां स्मृतिकाराणामपि सम्मति वरीवर्ति, यथा याज्ञवल्क्य—

बृहस्पतिव्यासप्रभृतिभिः स्पष्टमेव विवेचितं यत् पितामहस्य सम्पत्तौ पिता पुत्रस्य संतानरूपेणाधिकारवान् वर्तते, ये मानवा एतादृशीं व्यवस्थां मन्यन्ते तेषां निराकरणाय निम्नरूपेण तर्काः प्रस्तूयन्ते—

वैदिकाग्निनां स्थापनायां वैदिकैः स्पष्टमेव जोघुष्यतेयदत्रदायभागे निश्चित-व्यवस्थया एवं सर्वं विधेयम् । यथा पुत्रोत्पत्यनतरमपि धार्मिकसंस्काराणां सम्पादनाय पिता पैतिकसम्पत्तितः किञ्चिदुधृत्य व्ययं कर्तुं शक्नोति । एवमेव कुलपति कुलव्यवस्थापका वेदेन स्मृतिजातैः निर्धारितनियमानुसारेण अपरिहार्यधार्मिककृत्यानां सम्पन्नकरणाय अचलां सम्पत्तिं परित्यज्य अन्यस्य पैतृकसम्पतेः व्ययं कर्तुं सक्षमा सन्ति । एतावदेव नहि अपितु कुलव्यवस्थापकः स्नेहोपहाररूपेण सम्पत्तिं दातुं शक्नोति । कुटुम्बपालनाय, कुले समागतविपत्तिनिराकरणाय अथवा स्वकीयकुलरक्षार्थं पैतृकसम्पत्तिं उपयोगकर्तुं प्रभवति । आवश्यकं श्राद्धादिसम्पादनाय अचलसम्पत्तिं कस्यापि अधीनां विधाय ऋणप्राप्तिं कर्तुं शक्नोति, अचल सम्पत्तिं विक्रेतुमपि विपत्तिकाले कुलाध्यक्षः सर्वथा सक्षमो वर्तते ।

शास्त्रानुसारेण व्ययकरणस्य नियंत्रणमपि सम्प्राप्यते—कौटुम्बिकीं परिस्थितिं पर्यालोच्यैव दानपुण्यकार्याणि कर्तुं शक्नोति नान्यथा, एतादृशी पद्धतिः न वर्तते यत् कुलाध्यक्षः स्वेच्छया समेषां वस्तूनां दानं कुर्यात्, कुटुम्बजनाश्च बुभुक्षिताः सन्तः पीडां प्राप्नुयुः । अत एव याज्ञवल्क्या शिक्षायां याज्ञवल्क्येन स्वकुटम्बाविरोधेन देयमिति, एतेन स्पष्टमेव भासते यत् नैषा सम्पत्तिः वर्तते यस्या आदानप्रदाने स्वेच्छया कुर्यात्, परञ्चादानप्रदाने समुचित व्यवस्थां ज्ञात्वैव विधेये । आदानप्रदानयोः करणाय योग्यतैव सर्वाधिको मापदण्डः । मदनरत्नेन दृष्टान्तमेकं दत्त्वा विषयोऽयं स्पष्टीकृतो वर्तते यथा—अन्नागारे सुरक्षितबीजानि न स्वत एव अंकुरितानि भवितुं शक्नुवन्ति परञ्च अंकुरितकरणस्य बीजेषु योग्यता अवश्यमेव वर्तते एवमेवात्र दायभागेऽपि विविच्य एव समुचिता व्यवस्थायामेव योग्यतया व्ययो संभवेत् नान्यथा । एवमेव यो मानवो यत् धनं समुपार्जति तस्य व्ययकरणस्य तस्याधिकारो न्यायप्राप्तो वर्तते, यतो हि सा तस्य अर्जिता सम्पत्तिः वर्तते । परन्तु मनुनारदादीनां मतानुसारं सम्पत्तिवन्तोऽपि त्रयः सम्पत्तिहीना परिगणिता, के तेत्रय इति जिज्ञासायां—पत्नीपुत्रदासाः । एते हि यत् किञ्चिदपि अर्जयन्ति तत्सर्वं पतेः, स्वामिन एव समधिकृतम्, न च तत्र स्वातन्त्र्येण अधिकारः । मनुव्यवस्थायां शबरस्वामिनाभिप्रायो भिन्न एव समादिष्टः । शबरस्वामिना विवेचितं यत् न मनोरिदं तात्पर्यं यत् पत्नी पुत्रदासैः समार्जितराशिस्तेषां नेति अपितु समुपार्जितस्य धनस्योपयोगं व्ययं वा पतिपितास्वामिनिर्देशमन्तरा न कर्तुं शक्यते इति । मनोर्व्यवस्थेयं दायभागेन मिताक्षराकारेण च समर्थिता ।

दायस्य विभाजनकालः—

अतिप्राचीन काले यदा कुलपतिसत्तात्मपरिवारः प्रचलितः आसीत् तस्मिन् समये पितुःपुत्रस्योपरि एकसत्तात्मकपूर्णाधिकार आसीत्, पितुरादेशपालनं पुत्रस्य परमं कर्तव्यमासीत्, कुले सम्पत्या विघटनं नाभीष्टमासीत्, अर्जितसम्पतेरधिकारः

पितुरेव स्त्रीणाञ्च सम्पत्तिसंरक्षणे नाधिकारः । मान्यतेयं वैदिकसाहित्ये धूंधलाजीवनेन प्रमाणिता भवति । ऐतेरेयब्राह्मणे— शुनःशेपस्य कथायां अजीगर्तेणस्वं पुत्रं वरुणाय क्रयणं कृतम्, विश्वामित्रेण च स्वस्य एकोत्तरशतेषु आत्मजेषु विद्यमानेष्वपि शुनःशेषं दत्तकत्वेनाङ्गीकृतः । एकोत्तरशतपुत्रेषु अनेकैः पुत्रैः स्वपितुराज्ञोलंधिताः, विश्वामित्रेषु न दायभागः कृतः, दायभागेन वंचिताः खलु ।

अनेन प्रसंगजातेन स्पष्टमवभासत यद् ऐतरेय ब्राह्मणस्य युगे पुत्रस्योपरि पितुः सर्वथा पूर्णाधिकार आसीत् । इत्थञ्च दायभागस्य विभाजनं पितुः भृत्योः पूर्वमेव यथाशास्त्रेण प्रतिपादितं तथा विधेयम् ।

दायविषये विद्यमानेष्वपि अनेकेषु मन्त्रेषु मनुवचनं सर्वथा प्रामाणिकमिति कृतं संदेहेन । यतोहि अस्य मानव धर्मशास्त्रस्याति प्राचीनकालादेव सर्वत्र विशिष्टादरोऽवर्तत, अत एव मनुस्मृतौ सर्वत प्राक्—

'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥'

भारते समुत्पन्ना स्वकीयाचरणस्य शिक्षा सर्वैगृहीतव्या इत्यनेन भारतीयानां चारित्र्यबलं कियत्प्रचलनमासीदिति अनुमानुं शक्यते । विशेषेण याज्ञवल्क्येनापि दायभागमश्रित्य या व्यवस्था कृता, सा सर्वथा समीचीनेति नात्र विवादावसरः । यतोहि योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन्, अत्र याज्ञवल्क्यस्य योगीश्वरत्वमभिधाय आदरातिशयः प्रकटितः, अतो दायभागेऽपि तन्निर्दिष्ट पन्था एव श्रेयान् इति अलं विस्तरेण ।

## 21

## कोऽयं श्राद्धः कति विधश्च ।

अथवा

## श्राद्धं पञ्चविधं प्राहुर्विप्राः शास्त्रस्य वेदिनः । (1982)

भारतीयानां संस्कृतो श्राद्धस्य विशिष्टं स्थानमासीत् मनीषिणः अस्य महत्त्वमुररीकृत्यास्य कृत्यमाचरन्ति स्म । श्रद्धया दीयते यत् श्राद्धमिति मन्तव्यम्, श्राद्धमहिमाशयस्य महिमान समुपवर्णयता स्मृतिचन्द्रिकाकारेण—

श्राद्धात्परतरं नान्यच्छ्रेयस्कर मुदाहृतम् ।
तस्मात् सर्वप्रयत्नेन श्राद्धं कुर्यात् विचक्षणः ॥

अत्र कारिकायां श्राद्धादधिकश्रेयस्करत्वं नान्योऽस्ति इति विविच्य सर्वप्रयत्नेन अस्य सम्पादनेऽपरिहार्यत्वं समालोचितम् । अस्मिन् विषये देवलेनापि—

अरोगः प्रकृतिस्थश्च चिरायुः पुत्रपौत्रवान् ।
अर्थवानर्थकामी च श्राद्धकामो भवेदिह ॥

परत्र च परां तुष्टिं लोकांश्च विविधान् शुभान् ।
श्राद्धकृत्यसमवाप्नोति यशश्च विपुलं नरः ॥

श्राद्धसम्पादनेन रोगरहितः पुत्रपौत्रवान् सन् मानव संसारे सर्वत्र यशः प्राप्नोति इति प्रमादमकुर्वता विवेकिना श्राद्धविधौ नालस्यं कर्तव्यमिति ।
योगीश्वरो याज्ञवल्क्योऽपि—

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षंसुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहः ॥

अयमभिप्रायः—मनुष्याणां पितरः श्राद्धकरणेन सन्तुष्टाः सन्तः आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सर्वविधानि च प्रयच्छन्ति । यमराजेनापि श्राद्धकरणं विष्णुपूजन सममिति प्रत्यपादि । यथा—

ये यजन्ति पितृन् देवान् ब्राह्मणान् सहुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥
आयुः पुत्रान् यशस्स्वर्गं कीर्तिं पुष्टिं बलं श्रियम् ।
पशून् सुखं धनं धान्यं प्राप्नुयात्पितृपूजनात् ॥

पितृणां पूजनं किं विदधाति, सर्वं खलु प्रयच्छति, अत एव "पितरि प्रीयमाणे तु प्रीयन्ते सर्वदेवता" इत्यनेन पितृणां सर्वदेवमयत्वंविवेचितम् । एवमेव मार्कण्डेय-पुराणेऽपि वेदव्यासेन—

पिता पितामहश्चैव तथैव प्रपितामहः ।
पिण्डसम्बन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः ॥
प्रयान्त्याप्यायनं वत्स सम्यक् श्राद्ध विधानतः ॥

अत्र श्राद्धे सम्यक् विधानञ्च नामशास्त्रानुसारेण विधानमेव । वृहस्तपतिरपि—

य एवं वेत्ति मतिमांस्तस्य श्राद्धफलं भवेत् ।
उपदेष्टानुमन्ता च लोके तुल्यफलौ स्मृतौ ॥

तथाऽकरणेऽपि दोषस्तेनैव दर्शितः—

न तत्र वीरा जायन्ते नारोगा न शतायुषः ।
न च श्रेयोऽधिगच्छन्ति यत्रश्राद्धं विवर्जितम् ॥

एवञ्च यदि कश्चनो मानवो जनिमवाप्यापि यदि श्राद्धं नाचरति तर्हि स न श्रेयोऽधिगच्छति, न च तस्य पुत्रा वीराः जायन्ते, न वा स शतायुर्भवति । एवञ्च श्राद्धस्यापीहार्थत्वं श्राद्धस्य प्रतिपादितम् । आदित्यपुराणेऽपि—

न सन्ति पितरश्चेति मनसि यो नरः ।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ॥

एवमेव मार्कण्डेयपुराणे धनाशुद्धावपि दोषो वर्णितः । यथा—

अन्यायोपार्जितैर्द्रव्यैर्यच्छ्राद्धं क्रियते नरैः ।
तृप्यन्ति तेन चण्डालाः पुल्कसाद्याश्च योनयः ॥

एवं विधशास्त्रकाराणां श्राद्धमहिमावर्णनेन श्राद्धस्यापरिहार्यत्वं नितरां सिद्धयतीति नाविदितं प्रेक्षावताम् । विविधाचार्यैर्लक्षितलक्षणोऽयं श्राद्धःकतिविधिः इति जिज्ञासायां वृहस्पतिः—

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डकम् ।
पार्वणं चेति विज्ञेयं गोष्ठयं शुद्धयर्थमष्टमम् ।।
कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ।।

नित्य नैमित्तिकयोर्लक्षणं पारस्करेणोक्तम्—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम् ।
वैश्वदेवविहीनं तु अशक्तोप्युदकेन तु ।।
एकोद्दिष्टं तु यच्छ्राद्धं तन्निमित्तिकमुच्यते ।
तदप्यदैवं कर्तव्यमयुक्तानाशयेद्विजान् ।।

यत् अहनिअहनि निष्पाद्यते तत् नित्यमुच्यते, यदि कश्चन श्राद्धीयवस्तु संकलने कर्तुमशक्तो भवेत्तर्हि तादृश्यामवस्थायां वैश्वदेवविहीनं केवलंनोदकेनापि कर्तुं प्रभवति । एकोद्दिष्टश्राद्धे एकमेवोद्दिश्यविधानात् आयुष्मान् ब्राह्मणान् भोजयेत् न युग्मान् । काम्यादीनां लक्षणं वृद्धवशिष्ठेनोक्तम्—

अभिप्रेतार्थसिद्धयर्थं काम्यं पार्वणवत्स्मृतम् ।
पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् ।।
नवानीतार्घ्यपात्रं च पिण्डश्च परिकीर्यते ।
पितृपात्रेषु पिण्डेषु सपिण्डीकरणं तु तत् ।।
गोष्ठयां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां प्राप्तौ सुखार्थं पितृ तृप्तये ।।

स्वस्याभीष्टसिद्धिकामनया पार्वणश्राद्धं विधीयते श्रद्धालुभिः । एवमेवात्मज जन्मप्रसंगे वैवाहिकमाँगलिक कार्ये च न वृद्धिश्राद्धं निष्पाद्यते ।
शुद्धयर्थस्य लक्षणं प्रचेतसोक्तम्—

क्रियते शुद्धये यत्तु ब्रह्मणानां तु भोजनम् ।
शुद्धयर्थमिति तत्प्रोक्तं श्राद्धं पार्वणवत्कृतम् ।।

अस्याभिधेयेनैव ज्ञायते यदिदं शुद्धिकरणायैव विधीयते, अथा च पार्वणवत् ब्राह्मणानां भोजनमेव क्रियते ।

कर्माङ्गादीनां लक्षणं हि पारस्करेणोक्तम्—

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं विधिवत्कृतम् ।।
देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते ।
तन्नित्यश्राद्धवत्कुर्याद् द्वादश्यादिषु यत्नतः ।।

गच्छन् देशान्तरं यद्धि श्राद्धं कुर्यान्तु सर्पिषा ।
तद्यात्रार्थमिति प्रोक्तं प्रवेशे च न संशयः ।।

श्राद्धभेदान् निरुप्येदानीं श्राद्धाधिकाराः के भवन्तीति जिज्ञासायाम्—

प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः ।
ज्ञातिबन्धुसुहृच्छिष्य ऋत्विग्भृत्यपुरोहितैः ।।

दिवंगतस्य पितुपुत्रेण महता यत्नेनन श्राद्धं विधेयम्, पुत्राभावे च ज्ञातिबन्धु सुहृच्छिश्यभृत्यपुरौहितैरपि श्राद्धं कर्तुं शक्यते । अत्र करिकायां पितृशब्देन मातुरति पुत्रैः श्राद्धं विधेयमिति विवेचितम । अत एव सुमन्तुः—

मातुः पितुः प्रकुर्वीत संस्थितस्यौरसस्सुतः ।।

अनुप नीतेनापि पुत्रेण श्राद्धाधिकारो वर्तते, अत्र सुमन्तुवचनं प्रमाणं यथा—

श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको हि यः ।
व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदि ।।

अत्र अव्रतस्थ शब्देनानुपनीतो विवक्षितः । अनुपनीतस्याधिकारे वृद्धमनुरपि—

कुर्यादनुपनीतोपि श्राद्धमेको हि यस्सुतः ।
पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः ।।

अत्र विषये व्याघ्रेण वैशिष्टयं प्रतिपादितं, तेषामिदमाकूतं यत्, अनुपनीतेन पुत्रेण वेदोच्चारं विना श्राद्धं विधेयम्, अनुपनीतस्य वेदानाधिकारात् । यथा व्याघ्रः—

कृतचौलस्तु कुर्वीत उदकं पिण्डमेव च ।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ।।

पुत्राभावे पत्नी अपि पिण्डोदकक्रियां कर्तुं प्रभवति । यथा शंखोक्तम्—

पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः ।
पुत्राभावे तु पत्नीस्यात् पत्न्यभावे तु सोदरः ।।

पितामहस्य यदि पुत्रो विद्यते तर्हि पुत्रेणैव कर्तव्य न पौत्रेण व्यवस्था धर्म-शास्त्राचार्याणाम् । यथा ऋश्यशृङ्गेण—

नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः ।

कदा श्राद्धं विधेयमिति कालनिर्णयप्रसंगे याज्ञवल्क्यः—

अमावश्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिः विषुवत्सूर्यसंक्रमः ।।
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ।।

चतुर्दश्यां श्राद्धं न विधेयमिति मनुना—

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ।।

अस्मिन् गर्गाचार्येण विवेचितं यत् पितृपितामहादीनां श्राद्धं न विधेयं, परञ्च-शस्त्रेणाहतस्य चतुर्दश्यां श्राद्धं विधेयमेवेति यथा—

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणात्परम् ।
एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिने ।।

एवञ्चैतावता एतत् सिध्यति यत् पुत्रस्य कुते स्वस्य पितुः श्राद्धविधानमावश्यकम् । यस्यकुले विद्यमानेऽपि कुलस्य जना श्राद्धे नाचरन्ति ते पापभागिनो भवन्तीति कृतं संदेहेन । अत्र श्राद्धे पवित्रायाः परमावश्यकता वर्तते, यदि पुत्रे महता समारोहेण श्राद्धमिदं निष्पाद्यते परञ्च पवित्रताया वातावरणं न विद्यते एतादृश्यां स्थितौ श्राद्धकरणाय पर्युत्सुका अपि पितरस्तद्युतं श्राद्धं न स्वीकुर्वन्ति, अतएव भागवते भगवता वेदव्यासेनास्य संक्षेपणाचरणमेव हितावहं विवेचितम् । यथा श्राद्धे कुर्यान्नविस्तरमिति भागवते ।

भगवता पाणिनिना तु अपत्य शब्दस्य व्याख्यानप्रसंगे विवेचितम् यत् अपत्य शब्दो हि नात्मनपर्याय किन्तु पुत्र पौत्रादिसंतति पर्यायः न पतन्ति नरके पितरो येन तदपत्यमिति पंक्तिविंशति सूत्र भाष्येऽपत्यशब्दव्युत्पादनात् तथा च पौत्रादयोऽपि पितामहादीनां नरकादुद्धर्तारस्तेषाममपिपौत्रत्वेन पुत्रत्वं संसाधितम् । एवञ्च महाभारतादौ जरत्कार्वाद्युपाख्यानेषु प्रसिद्धमेव । महाभारते-जरत्कारुर्नैष्ठिक-ब्रह्मचर्यपरायणो बभूव, एवञ्चास्य मातृ-पित्रोः न केनापि श्राद्धमाचरितम्, तस्याननुष्ठानेन नरके तस्य पितराविति विस्तारेण निरूपितम् । अतः श्राद्धकरणमावश्वकमिति स्थिति । भगवता रामेण तु सीतागवेषणप्रसंगे मध्यमार्गे मृतस्य जटायोः न केवलं दाहरेव कृत, अपितु श्राद्धमप्यनुष्ठितमिति वाल्मीकिरामायणे विवेचितम् ।

एवमेव गयायां पिण्डदानस्य वैशिष्ट्यं प्रतिपादितम्, मृतस्य पितुः पुत्रो यदा श्राद्धकरणाय फल्गूनदीमवतरन्ति, तस्मिन् पितरो नितान्तं समुत्सुकाः सन्तो नृत्यमाचरन्तीति न केवलं शास्त्रेष्वेव विवेचितम्, परञ्च गयानिवासिनः श्रद्धालवोऽपि पारम्पर्येण श्रुतमिदं तथ्यं प्रकटयन्ति अत एव शास्त्रकारैः—

"गयायां पिण्डदानाञ्च त्रिभिः पुत्रस्य पुत्रता । इत्युक्तम् ।"

श्रूतयते वाराणस्यां प्रेतशिलाख्यस्थाने पुत्रेण पिण्डप्रदानात् प्रेतत्वं प्राप्तस्यापि पितुर्मोक्षो जायते । एवमेव बदरीकारण्येऽपि ब्रह्मकपालीति नाम्निस्थानेऽपि स्वस्य पितृणां प्रीत्यर्थं पिण्डदानेन श्राद्धं विधीयते । तेन च पुत्रः सर्वमभवाप्नोति ।

## 22

## भारतीं भारतीयानां देववाणीमुपास्महे ।

अथवा

**संस्कृतभाषायाः संस्कृतिपोषकत्वम् ।** (1983)

अथवा

**संस्कृतभाषायाः अभ्युत्थानोपायाः ।** (1988)

इतिहासस्य महदाश्चर्यं हि संस्कृतं नाम । संस्कृतं देशस्य शक्तिस्रोतः, जनभावनाया उदात्तीकरणस्य त्रिपथगा, राष्ट्रैक्यस्य सनातनं सूत्रम्, सुसंस्कृतानामाचार्याणां जीवनसर्वस्वं च वरीवर्ति । भारतवर्षस्य यत्किमपि वैशिष्ट्यम्, श्रेष्ठम्, सर्वोत्तमञ्च तन्निखिलमेव अस्यां महाभाषायां सञ्चितं विद्यते । संस्कृताध्ययनस्य तात्पर्यम् तासां सर्वासां मान्यतानां स्वीकरणं, याः मनुष्येभ्यः पूर्णतमं न्यायसिद्धं जीवनञ्च प्रयच्छन्ति ।

यदि वयं मनुष्यमवगन्तुं वाञ्छामः, यन्न केवलं दर्शनशास्त्रस्य प्रत्युत् ज्ञानमात्रस्योद्देश्यम्, तर्हि संस्कृत-साहित्यस्याध्ययनं कर्तव्यमेव । संस्कृतसाहित्ये मानवजीवनस्य तेषां स्थायितत्त्वानां विवेचनं विद्यते, यानि आधारीकृत्यं सभ्यता संस्कृतिश्च निर्मीयते, मानव जातेरितिहासस्य परम्पराश्च संस्थाप्यन्ते । मनुष्यत्वस्य पूर्णतायै संस्कृताध्ययन तथावश्यकम् यथाद्यत्वे आधुनिकविषयाणमवगमनाय वैदेशिकभाषाणां परिज्ञानम् । संस्कृते तादृशाः लेखका विचारकाः साधकाश्चाभूवन् यैर्न केवलं भारतवर्षं प्रत्युत निखिलमेव जगत् धन्यमात्मानं मन्यते ।

संस्कृतं न केवलं भारतस्य अपितु निखिलस्यापि विश्वस्य प्राचीनतमा परिष्कृता च भाषा, या मानव-संस्कृतेः सभ्यतायाश्च सृष्टौ सर्वाधिकं सहयोगं प्रायच्छत् । इयमेव केवला भाषा, या भूतले मानवस्य प्रादुर्भावादारभ्य अद्ययावदपि सुरक्षिता समागच्छति । मनुष्यजीवनस्यादिमध्यावसानेषु सदा समपेक्षितेयं वाणी मानव-जातेरितिहासस्य मानसिकविकासस्य क्रमाणां चाध्येतृभिः सर्वदा पठनीया वाञ्छनीया च । संस्कृतसाहित्ये निहितविचारधाराभिः संसारस्य असंख्यपुरुषाः प्रेरिताः प्रभाविताश्च । तेषां कल्पनाः समान्दोलिताः जीवनस्य अर्थानां रहस्यानां च नवीनाः पक्षाः समुद्घाटिता । सा याथार्थ्येन विश्वव्यापिनी । इदमेव तत साहित्यम्, यस्मात् अद्ययात्रदपि परिदृश्यमाना महापुरुषा उत्साहं चालभत्त, परिपूर्णतां चाध्यगच्छन् । परितन्त्रेऽपि देशेऽस्माभिः नष्टा प्रतिष्ठा, तेषामेव नेतृणां प्रयत्नेन प्राप्ता, येषां दृष्टि संस्कृतज्ञानेन समृद्धा आसीत् । देश संस्कृतेकत्थानपतनयोः इतिहासोऽपि अस्मिन्नेव साहित्ये निलीनो वर्तते । अस्यैव ग्रन्थेषु विगतपरः सहस्रवर्षाणामनुभवः सञ्चितो विद्यते, येषु मानव-जीवनं सहस्त्रशो व्याख्यातम्, यदधीत्य विश्वस्यापि विश्वस्य चेतश्चमत्कृति लभते ।

अद्यापि भारत-वासिनां समूह-चेतना संस्कृतसभ्यतयैव प्रभाविता। संचारिणी दीपशिखेव भारतीयमस्तिस्कस्य सर्वोत्कृष्टं प्रकाशयन्ती अतुलनीयेयं भाषा। अस्याः सम्यगाश्रयं विना भारतवर्षस्यात्मा कदापि तृप्तिं न गच्छेत्। भारतस्य तु समग्रप्रकृतौ अद्यापि अस्या एव एकच्छत्रं साम्राज्यम्। अस्माकं वैयक्तिकानां सामाजिकानां चाचार-विचारादिकानामधिष्ठानभूमिरियमेव भाषा। अस्माकं जीवने यत् किमपि सारभूतम्, यैरादर्शगुणैश्च भारतीयजीवनं प्रगुणितम्, ते सर्वे संस्कृतभाषायामेव प्रत्यक्षीकर्तुं शक्यन्ते। "संस्कृत विना हिन्दुजीवनं त्वसंस्कृतमेव। अद्यापि वयं संसारे संस्कृत-कारणादेव जीवामो जीविष्यामश्च"। "संस्कृतं भव्यं उदात्त च न पितृधनं यावच्चेदं तिष्ठेत् जनजीवनं च प्रभावयेत्, तावदेहि भारतस्य भारतत्वम्" इति गाँधी-राजेन्द्र-नेहरूप्रभृति-राष्ट्रनेतारः अवोचन्। भारते संस्कृतस्यैव सभ्यता प्रसरति। वेदोपनिषद, मनु-वाल्मीकि-व्यासप्रभृतयोऽद्यापि अस्माकं जीवनं शासति। संस्कृते भारतं वैदिक-कालादेव चिन्तयदास्ते हिन्द्यां तु चिन्तनस्य अधुना प्रारम्भ एव। भारतस्य एकैकोऽपि नागरिकः संस्कृतेन सम्बद्धः। प्रायः त्रिशत्कोटिभारतीयानां जन्म-विवाह-प्रार्थनादिशुभाव-सरेषु च संस्कृतमन्त्रा एव श्रूयन्ते।

मृतानामपि सञ्जीविन्याः संस्कृत-भागीरथ्या अखण्डः प्रवाहः पालिप्राकृत-अपभ्रंश-भाषासु वहन् अद्ययावदपि सर्वासु भारतीयभाषासु प्रवहति। सूत्रे मणिगणा इवं संस्कृतेऽनुस्यूताः समस्तभारतीय भाषाः संस्कृतसौरभेणैव सुरभिताः। राजभाषा-त्वोपयुक्तं हिन्द्या निर्माणं संस्कृतशब्दाधीनम्। संस्कृतशब्दावलिं विहाय हिन्द्याः राष्ट्रियसंवेदनापि समाप्तिमेव गमिष्यति। संस्कृतभाषाया शब्दाः येन केन प्रकारेण प्रायः सर्वासु भाषासु उपलभ्यन्ते। हिमालयान्निर्गच्छन्ती गङ्गेव संस्कृतशब्दावलिः सर्वत्रापि प्रोक्षणकर्म कुर्वाणा राजते। अद्यापि भारतीय-भाषाणां विकासः संस्कृत-परतन्त्र एवास्ति। आसां भाषाणां शब्दकोशः साहित्यस्वरूपम्, कल्पनाः पारिभाषिक-वाक्यानि, अलङ्कारशास्त्रञ्च सर्वं संस्कृताश्रितमेव। संस्कृतप्राणा सर्वा इमाः संस्कृतं विना अन्धाः बधिराश्च भविष्यन्ति। अस्मादेव कारणात् संस्कृतसाहाय्येन कश्चिद-प्युत्तर भारतीयः तमिल-तेलगू-कन्नड़-मलयालम-उड़िया-आसामीत्यादिभाषाभिज्ञो भवि-तुमर्हति, एवमेव दक्षिणपूर्वोत्तरभारतीय हिन्द्यादिभाषाभिज्ञ।

किन्नाम तत् साहित्यं, येन साहित्यशब्दव्याञ्जितानां समेषामर्थानामाश्रयभूतस्य संस्कृतवाङ्मयस्य उपमोत्प्रेक्षाव्यञ्जनाभिः सूक्तिभिश्च आत्मा न सज्जीकृतः। संस्कृत-मेघमालाया वृष्टिं विना भारतीयभाषासु साहित्यशस्योत्पत्तिरेव सुदुर्लभा स्यात्। संस्कृतस्य शाश्वतीं जीवनधारां च परिहाय भारतस्य काचिदपि भाषां भारतं भारत-रूपेण स्थैर्यमपि प्रदातुं न शक्नोति। संसारस्येदं महदाश्चर्यम्, यद् वेदानां भाषा अद्ययावदपि अपरिवर्तिता वर्तते। अयं प्रश्न न केवलं भाषयैव सह सम्बध्यते, प्रत्युत् अस्य सम्बन्धः अस्माकं सम्पूर्ण भारतीय संस्कृत्या, जीवनप्रणाल्या, राष्ट्रिय-स्वाभिमानेन च वरीवर्ति। संस्कृतभाषा तादृश्याः राष्ट्रीयचेननायाः राष्ट्रीय स्वाभिमानस्य च जन्मदात्री यत् कैश्चित् स्वार्थपूर्णतत्त्वैः वैदेशिकभाषायाः कठोरलौहपाशे निगदितम्।

संस्कृतं हि नाम भारतीयसंस्कृतिसभ्यतायारविभाज्यमङ्गम् । अनेकसहस्त्रवर्षेभ्यो भारतीय आत्मा अस्यामेव भाषायां परिस्फुरति, समभिव्यज्यते च । परसहस्त्रवर्षेभ्यो दिव्येयं वाक् महतो भूभागस्य आध्यात्मिकसांस्कृतिकसामाजिकं-संवेदनां वाहनं वर्तते । न केवल दार्शनिकैः कविभिर्महर्षिभिः प्रत्युत वैज्ञानिकैः चिकित्कैर्गणितज्ञैश्चापि संस्कृत-भाषायामेव स्वीया विचाराः समुपनिबद्धाः । संस्कृतभाषायाः परिचयेन विना भारतस्य व्यक्तित्वं हार्दं हृदयं वा अवलोकयितुमशक्यम् । संस्कृतसाहित्याद् वयं भारतीय-धर्मस्य दर्शनस्य च धारान्तर्धाराणाम्, बौद्धिकान्तर्द्वन्द्वानाम्, आध्यात्मकोद्वेगानां च मध्ये सततं प्रवाहितायाः भारतीय संस्कृतेरविच्छिनतां भारतीयमनीषायाः समाहारशक्ति च ज्ञातुं शक्नुमः । यैर्विचारैः भारतीयसंस्कृतेर्महनीयता विश्वे प्रतिष्ठापिता, संस्कृत-साहित्यं तस्या एव कलेवरम् । संस्कृतं विना भारतीयसंस्कृतिरनाथैव । संस्कृतभाषायां भारतराष्ट्रस्य तपश्चर्या सत्यदर्शनम्, गौरवं चाभिव्यक्तिमभजन्त । अस्माकं सर्वाणि वस्तूनि सर्वश्रेष्ठविचाराः, भावनाः कविताश्च संस्कृत भाषयैव वेष्टिताः । भारतीय-संस्कृतेस्तानि तत्त्वानि निर्गच्छेयुर्येषां जन्मसंस्कृताद् जातम्, तर्हि भारतीयसंस्कृतिनाम्ना किमपि वस्तु नावशिष्यते ।

उद्देश्यस्य एकरूपताया अभावे राष्ट्रियताया विकासोऽसम्भव एव । बाह्यदृष्ट्या ऐक्यं प्रदर्शयदपि राष्ट्रं सकटसमये बहुधा विभज्य स्वाधीनभावं स्वातन्त्र्यं च नाशयति । संस्कृतभाषाविभिन्नविचाराणां विश्वासानां च मध्ये समन्वयात्मिकां परिस्थितिं समुत्पाद-यती देश समाजस्य च अन्तः संवेदनशीलतां संस्थापयति । येन कार्यविचाराणां वैभिन्न्येऽपि नागरिकचेतः सु भावनात्मकमैक्यं सुस्थिरं भवति । अस्माकं जन्मकाला-दारभ्य मरणपर्यन्तं संस्कारेषु संस्कृतस्य प्रयोग आवश्यकः ।

अस्माकमादर्शवचांसि संस्कृतमयानि । निखिलमपि भारतं आकैलाशात् च कुमारीभ्यः आसिन्धु आब्रह्मपुत्रं चैकदेशभावनया वर्णिते संस्कृत-साहित्ये । वयं भार-तीयाः सहस्त्रमीलदूरे निवसामः, पृथक्-पृथक् रीतिविचार-परम्पराश्च तथापि संस्कृत-सूत्रेण मणिमाला इव निबद्धाः । एवं हि संस्कृतं प्रतिपलं निजशक्त्या राष्ट्रजीवनं पुष्णाति । अंग्रेजमुसल्मानयोः सुदीर्घे शासनकालेऽपि संस्कृतप्रभावात् सुदृढ़ं सुरक्षितं चैक्यमधुना विघटितं प्रतीयते । अतः केवलं भाषारूपेणैव तस्याः पोषणं नावश्यकम्, प्रत्युत् राष्ट्रस्यास्तित्वसिद्धये परमावश्यकं भवतिः तस्याः संरक्षणम् ।

संस्कृत-साहित्य-दर्शनयोरध्ययनं मानवाय गम्भीरमानन्दं सूक्ष्म-विचारशक्तिं च प्रयच्छति । संस्कृताध्ययनात् मृदुता-प्रियवादिता-कृतज्ञताऽनुसूयताप्रभृतयः आत्मगुणा विकसन्ति, राष्ट्रचारित्र्यं वर्धते उदारचरितमुपचीयते मस्तिष्कं परिष्क्रियते सर्वत्रापि मनुष्यता च व्यवहारं व्याप्नोति । मनुष्योन्नतये संस्कृते वर्तमाना सामग्री अन्यत्र दुर्लभा । जीवने नैतिक-सामाजिक-गुणानां संवर्धनायापि संस्कृताध्ययनं भृशमुप-करोति ।

संस्कृतस्य वैज्ञानिकी वर्णमाला अद्यापि सर्वाः भाषाः अतिशेते । संसारे तौलनिक भाषाशास्त्रस्य, पुराणशास्त्रस्य, साहित्यशास्त्रस्य चाध्ययनने संस्कृतसाहित्येन

महदुपक्रियते । वैदिकपरिभाषाभ्यः, प्राकृतिक-रहस्यवर्णनेभ्यः, सूर्य-चन्द्रहरितक्यादि-शतशः शब्दानां पर्यायविशेषेभ्यश्च वैज्ञानिकैरपि स्वानुसन्धाने किमप्यलभ्यं वस्तु प्राप्येत । एवं हि संस्कृतं नास्ति जीवनस्य तादृशं किमपि क्षेत्रं यत्र किमप्यपूर्वं प्रदातुं न शक्नोति । निखिलस्यापि विश्वस्य मनीषिणः संस्कृतसदृशीं भाषां प्राप्य प्रमुदिता आश्चर्यचकिताश्चाभूवन् । इदं तैर्लिखितेभ्योऽगणितग्रन्थेभ्यः प्रतीयते ।

विलियम थियो डोरोऽकथयत्—"पुरातत्वानुसन्धानकार्यं संस्कृताध्ययनं विना जगतः जातिदेशकालभूगोलेतिहासा वा अपूर्णा एव । वैज्ञानिकसाधनैर्जगत ऐक्यं वर्धते अवश्यम्, परमिदं संस्कृत-ज्ञानं विना चिरन्न स्थातुं शक्नोति । भारतस्य विश्वस्य च समुद्धारः परिरक्षणं स्थापनं च संस्कृतज्ञानाधीनम् ।" संस्कृतभाषायाः सौन्दर्यम्, शैली, शब्दसम्पत्तिः गतिशीलता, प्रतिपादितविचाराः, श्रेष्ठा चाध्यात्मविद्या यदा मनश्चक्षुषां पुरस्तादागच्छति, तदा को न भवति विस्मयविमुग्धः । अतः राष्ट्रस्यशैक्षणिके सामाजिके च जीवने च संस्कृतभाषायाः स्वीकरणं परमावश्यकम् ।

## 23

## संस्कृतं संस्कृतिश्च ।

अथवा

## इतिहासपुराणं च पञ्चमो वेद उच्यते । (1984)

संस्कृतिर्नाम दोषनिराकरणपूर्वकगुणस्थापनात्मकः संस्कारपरपर्यायो व्यापार-विशेषः । स च येन सम्पद्यते, तद् वेदविहित शास्त्रपुराणप्रतिपादितं तन्त्राद्युदितं वा कायिकं वाचिकं मानसिकं वा कर्मजातमति संस्कृतिः सम् पूर्वकात् करोतेर्भावे करणे च क्तिना घञा चोक्तस्य शब्दद्वयस्यापि निष्पद्यमान त्वात् ।

वैदिकानां पौरिकाणानां धर्मादिशास्त्रीयाणां वैष्णवशैवशाक्तादितन्त्रोदितानां च कायिकवाचिकमानसिककर्मणां वेदान्तादिशास्त्रोदितानां विचाराणां भावनानाञ्च सर्वेषामपि धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टय साधकत्वेन तत्र दोषनिराकरणपूर्वक-तत्तद्स्थापकत्वात् संस्कृतित्वम् । अभावस्याऽपि कस्यचिद्दोषत्वेन लाभस्याऽपि च कस्यचिद् गुणत्वेन उक्तेषु पुरुषार्थचतुष्टयसाधकेषु कर्मसु यत्र दोषो गुणो वा न स्फुटः तत्रकस्यचिदभावस्यैव दोषत्वेन कस्यचिद् लाभस्यैव च गुणत्वेन कल्पनात् पुरुषार्थ-चतुष्टयसाधकेषु सर्वेष्वपि कर्मसु भावेषु वा दोषनिराकरणपूर्वक गुणस्थापकत्वस्योप-लब्धेस्तेषां संस्कृतित्वं स्पष्टमेव । एवम् आयुर्वेद-धनुर्वेद-गन्धर्ववेदैः अपरैश्चापि विद्या-कलाप्रतिपादकशास्त्रैः प्रतिपादितानां कर्मणामपि तेषु धर्मादिपुरुषार्थ चतुर्वर्गसाधकत्वेन तत्तदभावरूपदोषनिराकरणपूर्वक-तत्तल्लाभरूपगुणस्थापकत्वेन संस्कृतिलक्षणात्वात् संस्कृतित्वमेव ।

उक्तानां वेदपुराणतन्त्रदर्शनादिशास्त्रप्रतिपादितानां कर्मणा विचाराणां भावनानामेव च धर्मादिचतुर्वर्गसाधकत्वात् चतुर्वर्गलाभस्यैव च भारतीयानां जीवनलक्ष्यत्वात् तान्येव कर्माणि एत एव विचारा: ता एव च भावना: भारतीय संस्कृति:, पूर्णा संस्कृतिर्वा ।

सैषा संस्कृति: संस्कृतमेवाऽलम्बते सर्वथा । यतोहि-धर्मादिचतुर्वर्गसाधकानि तत्प्रतिपादिकानि वा वेदा: शस्त्राणि पुराणानि दर्शनानि तन्त्राणि अन्येऽपि च विविधविद्याकलानां प्रतिपादका निबंधा: संस्कृतभाषायामेव वर्तन्ते ।

तत्र सर्गादौ करुणावरुणालयो भगवान् विरञ्चि: मानवीं सृष्टिं मिसृक्षु: श्रेय: प्रेयश्च विधित्सु: सर्वत: प्राक् विराट्-पुरुषनिश्वसितरूपान् संस्कृतमयान् ऋग्यजु: सामलक्षणान् अग्निवायुसूर्यस्थितान् कल्पादौ तत् आकृष्य आविर्भावयामास । यथोक्तम्—

"यस्य नि:श्वसितं वेदा: ।"

"अग्निवायुरविभ्यस्तु त्रयं ब्रह्मसनातनम् ।
दुदोह यज्ञसिद्धयर्थमृग्यजु: सामलक्षणम् ।।"

इति च ।

तेषामेव वेदानाम् 'इन्द्रशत्रुर्वधस्व' इत्यादाविव स्वरभेदेन अर्थभेदस्य निश्चितत्वात् तात्पर्याऽविषयार्थस्य चाऽनिष्टजनकत्वात् 'अस्य वर्णस्य अनेन स्वरेणोच्चारणं विधातव्यम् ?' इति ज्ञानाय शब्दानामनेकार्थत्वेऽपि 'अमुकस्थाने अमुकशब्दस्य अमुक एवार्थ:' इति निश्चयजनकपरिपाटीबोधाय अमुककर्मणोऽमुक एव विधिरिति निर्णयजननाय छन्दसां कर्मोपयुक्तकालानां शब्दगतप्रकृतिप्रत्ययादेश्चाऽवगमाय ऋतम्भराप्रज्ञया धनिभि: ऋषिमुनिभिर्वेदाङ्गशास्त्राण्यप्याविर्भावितानि संस्कृतनिष्ठानि । यथा—

छन्द: पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।।
शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।।

तत्र पुरुषार्थचतुष्टयसाधकानां वेदानां ज्ञानकर्मोपासनाकाण्डरूपै: काम्यकर्मसाधकानां च तेषामथर्वरूपेण भगवता व्यासेन कृतेष्वपि वर्गेषु धर्मार्थकाममोक्षोपायानां कर्मणां विशेषेण विस्तरेण च प्रतिपादकानि धर्मादिशास्त्राणि पुराणानि दर्शनानि तन्त्राणि च लोकहितचिन्तनपरै: ऋषिभिराविर्भावितानि सुरगिरा ।

तत्र कानिचिच्छास्त्राणि 'अहरह: सन्ध्यामुपासीत, सायं प्रातरग्निहोत्रं जुहुयात्' इत्यादिश्रुतिवत् नित्यानि आह्निककर्माण्येव प्रतिपादयन्ति, यथा—

पूर्वां सन्ध्यां जपं तिष्ठेत् स्वकालेचाऽपरां चिरम् ।
ऋषयो दीर्घसन्ध्यत्वाद् दीर्घमायुरवाप्नुयु: ।।
प्रज्ञां यशश्च कीर्तिञ्च ब्रह्मवर्चसमेव च । इति,

अध्यापनं ब्रह्मयज्ञ: पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिभौर्तो नृयज्ञोऽतिथिपूजनम् ।।

"पितृन् श्राद्धैश्च नृनन्नैर्भूतानि बलिकर्मणा।"

इत्यादिषु शास्त्रेषु आन्हिककर्मणां प्रतिपादनमुपलभ्यते।

कानिचिच्छास्त्राणि द्विजानां तन्बाबीजगर्भप्राप्तपापानोदकानि ब्राह्मीत्वसंपादकानि च गर्भाधानादिसंस्कारकर्मण्येव प्रतिपादयन्ति, यथा—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्यं शरीरसंस्कारः पावनः प्रेत्य चेह च॥
गार्भैर्होमैर्जातकर्म चूडा मौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥
स्वाध्यायेन वर्तैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥

इत्यादिषु स्मृतिग्रन्थेषु संस्काराणां प्रतिपादनं प्राप्यते।

एवं कानिचिच्छास्त्राणि जयन्त्येकादशीप्रभृतीनि सांवत्सरिककर्माणि कानिचिच्चोपरागादिनिमित्तिकस्नानादीनि नैमित्तिककर्माणि नित्यानि प्रतिवादयन्ति। नित्यत्वं चैषां फलयोगेप्यकरणे प्रत्यवायश्रवणान्मन्तव्यम्।

कानिचिच्छास्त्राणि पुनः स्त्रीपुत्रगोभूम्यादिस्वर्गादिफलकानि काम्यान्येव कर्माणि प्रतिपादयन्ति, यथा—

"आराधिता सैव नृणां भोगस्वर्गापवर्गदा।
यै यं चिन्तयते कामं त तं प्राप्नोति मानवः॥"
"न हस्तिसर्पदावाग्नि चोरशत्रुभयं भवेत्।
नश्यन्ति दारुणाः रोगाः सत्यं सत्यं वदाम्यहम्॥"

कानिचित् शास्त्राणि वर्णधर्मान् प्रतिपादयन्ति, यथा—

अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत्॥
शमो दमस्तप शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाऽप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्मस्वभावजम्॥
कृषि गौरक्ष्य वाणिज्यं वैश्यकर्म स्वभावजनम्।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्॥ गीता॥
इत्यादिषु शास्त्रेषु वर्णधर्माः प्रतिपाद्यन्ते।

एवम्—

वर्णधर्मः स्मृतस्त्वेक आश्रमाणां ततः परम्।
वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तकस्तथा॥

इत्यादिषु वर्णाश्रमनित्यनैमित्तिकानि कर्माणि धर्मत्वेनोदाहृत्य मानवमात्रसामान्यधर्मानप्याहुर्दयालवः मुनयः धर्मसंहितासु, यथा—

धृतिः क्षमा दमोऽस्तेय शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमकोषो दशकं धर्मलक्षणम् ।।
सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ।।
सन्तोषः समदृक् सेवा ग्राम्येहोपरमः शनैः ।
नृणां विपर्यये हेक्षा भौनमात्मविमर्शनम् ।।
नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।
त्रिशल्ललक्षणवान् राजन् सर्वात्मा येन तुष्यति ।।

इत्यादि सामान्यधर्मा प्रतिपादिता दृश्यन्ते ।

धर्मसाधकानि कर्माणीव धर्माविरोधिनोऽर्थस्य संग्रहमपि तेषु तेषु निबन्धेषु प्रोचु सुरसरस्वत्यैव महर्षयः, यथा—

सर्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः ।
यात्रामात्रप्रसिद्धयर्थं स्वैः कर्मभिरगर्हितैः ।।

इत्यादौ । एवमन्यानपि प्रकारान् अर्थसंग्रहस्य जगदुः स्वस्वनिबन्धैर्भारतीयजनहितचिन्तका वृहस्पतिशुक्रचाणक्यादयो महात्मान आन्वीक्षिक्याम्, तदुक्तम्, 'आनवीक्षिक्याऽर्थविज्ञानम्' इति ।

यद्यपि 'धर्मार्थकाममोक्षाख्याश्चत्वारोऽर्थामनीषिणाम्' इत्यादौ धर्मार्थकामानामपि मोक्षसमकक्षत्वेन मनीषिजनपुरुषार्थत्वमुक्तमुपलभ्यते, तथाऽपि—

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।"

इत्यादिना स्वाध्यायाध्यनाध्यापनाभ्याम् ऋषिऋणस्य यज्ञैर्देवऋणस्य धार्मिकसुतलाभेन पितृऋणस्य च अपाकरणपूर्वकस्यैव मोक्षाभिलाषस्योक्तत्वात् मोक्षस्यैव मानवजीवनचरमलक्ष्यत्वेन मुख्यता प्रकटी भवति, त्रिवर्गस्य च तत्साधनत्वेन गौणतैव ।

स च मोक्षो रुचीनां वैचित्र्याद् ऋजुकुटिल तानापथजुषां विदुषां स्वस्वरुच्यसारभिर्नानाभेदैर्भिन्नो विविधप्रकारैर्वर्णितः, उपलभ्यते मोक्ष परायणानां दार्शनिकानां विबुधवाङ्निबद्धेषु विविधेषु दर्शननिबन्धेषु ।

यो हि मोक्षो मानवजीवनस्य चरमलक्ष्यत्वेन स्वीकृतः सर्वैरपि महापुरुषैः तदुपायः—

योगास्त्रयो मया प्रोक्ता नृणां श्रयो विधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित् ।।

इति भगवद्वचनानुसारं ज्ञानकर्मभक्तिभेदभिन्नः सर्वोऽपि सुरसरस्वतीसंस्कृतमयेष्वेव स्वस्वमहानिबन्धेषु विवेचितोऽति लोककरुणावशैर्महात्मभिः ।

वेदशास्त्रादिप्रतिपादिता अर्थाः पथ्याः श्रेयः प्रेयः संपादका अपि कदाचिद् दुरूहा सन्तः सुकुमारमतिभिरग्राह्या भवेयुः अतस्तदीयानेवाऽर्थान्—

निर्दूषणा गुणवती रसभावपूर्णा ।
सालंकृतिः श्रवणमंगलवर्णराजिः ।।

इत्युक्तविधां सरसमनोहरां सुरसरस्वतीपदोपन्यासशैलीं परिशीलयन्तो महामनीषिणः सूरयः सुरुचिरैः काव्यनाटककथाख्यायिकादिप्रबन्धैः प्रतिपादयामासुः। उक्तमेव यथा—

स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुज्जते।
प्रथमालीढमधवः पिबन्ति कटुभेषजम् ॥ इति ॥

अलं विस्तरेण वाचारम्भणेनैतेनैतत् परिदर्शितं भवति, यत् मानवजीवनस्य लक्ष्यभूतं पुरुषार्थचतुर्वर्गात्मकं यत्किंचिदपि ऐहिकमामुष्मिकं वा प्रेयः श्रेयोवास्ति, तत्प्रतिपादकं वैदिकं लौकिकं वा आर्षमनार्षं वा सर्वमपि साहित्यं भारतीयनां सर्वस्वभूतायां संस्कृतभाषायामेवाऽवगाहमानं वर्तते।

अतः पत्रपुष्पफलेप्सुभिर्विटपिनां मूलमिव भारतीयजनगणहितैषिभिस्तदीयजीवननौकाकर्णधारैः भारतीयायाः संस्कृतेः सर्वतोमुखीनप्रसाराय तन्मूलाधारभूता सुरसरस्वती कल्पलतैव सुतरां सर्वथा सेवनीया संवर्धनीया संप्रसारणीया च।

## 24

## साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः।

अथवा

## अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।

अथवा (1982)

## चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि, काव्यादेव। (1982)

अनादिकालतः प्रवर्तमानायामस्यां सृष्टावनाद्यनन्तस्य परब्रह्मण इव कवेः सर्जनात्मकप्रवृत्तिमत्त्वादुभयोरभेदं प्रतिपादयती भगवतीश्रुतिरपि—"कविर्मनीषी परिभूः स्वयंभूः", 'तदैक्षत एकोऽहं बहुस्यां प्रजायेय' इति च। अतएव च साहित्यिकाः सर्वेऽपि भावाः सत्कार्यवादिनां सांख्याचार्याणामिव जलविलीनपावक इव भाषतान्तः स्फुलिङ्गा इवाव्यक्तरूपेण वटबीजन्यायेन वाऽन्तर्हितास्तत्र तत्र। एवञ्च साहित्यस्यानादित्वमापतति। तत्र एवञ्च जिज्ञासायत् किमिदं साहित्यं यस्यानादित्वमाख्यायते, अत्रोच्यते—सहभावः साहित्यं, स च शब्दार्थौ सम्भवति तथा च राजशेखरेण—'शब्दार्थयोर्यथावत् सहभावेन विद्यासाहित्यविद्ये ति' प्रतिपादितम्।

विश्वकविरवीन्द्रमहोदय एतावता परितुष्यन् लिखति—"यत् केवलं भावस्य भावेन भाषायाः भाषया सह ग्रन्थेन सम्बन्धो न साहित्यमपितु मनुष्येन सह-मनुष्यस्य वर्तमानस्यातितेन विप्रकृष्टेन सन्निकटस्यात्यन्तिको य आन्तरिक सम्बन्धो स हि साहित्यमनन्तरा नोपपादितुं शक्यते। महाकविकालिदासेनाप्युक्तमेतदेव—"वागर्थाविव सम्पृक्तौ वागर्थ प्रतिपत्तये।" इति।

माघकविनापि—'शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते'—इत्यादिना शब्दार्थयोः सहभावः एव साहित्यमिति साधितम् । लक्ष्यानुसारिणी लक्षणव्यवस्था—इत्यनुसृत्यैवानन्तरभाविभिराचार्यैर्लक्षणानि व्यधायिषत । तत्र भामहः काव्यालंकारे—'शब्दार्थौ सहितौ काव्यम्', मम्मटोऽपि—'तददोषौ शब्दार्थौ' इत्यादि, महिमव्याख्याऽपि न च काव्ये शास्त्रादिवदर्थमात्रप्रतीत्यर्थं शब्दमात्रं प्रयुज्यते । सहितयोः शब्दार्थयोस्तत्र प्रयोगात् ।

साहित्यं तुल्यकक्षत्वेनान्यूनानतिरिक्तत्वमिति । साहित्यमनयोः शोभाशालीनतां प्रतिकाऽप्यसौ । अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः । तत्र निर्दोष-शब्दार्थ-गुणत्वे सति स्फुटमिति-अच्युतरायः । सहृदयहृदयाह्लादिशब्दार्थमयत्वमिति ध्वन्यालोककारः । चमत्कारिशब्दार्थयुगलभावमाश्रित्यैव तद्विशिष्टं साहित्यं काव्यशब्देन व्यवजहुः । अत एव च तदानीन्तन्यैराचार्यैर्निबद्धाः ग्रन्था अपि तथाविधनामभिरेव प्रसिद्धा यथा—काव्यालंकारः, काव्यप्रकाशः, काव्यादर्शः इत्यादयः । रुद्रटः ननु शब्दार्थौकाव्यम् । काव्यशब्दोऽयं गुणालंकारसंस्कृतयोः शब्दार्थयोर्वर्तते । भक्तकवि तुलसीदासोऽपि शब्दार्थयोः सहभाव जलवीचिवदविच्छिन्नमिव स्वीकरोति—

गिरा अरथ जलवीचि सम कहियत भिन्न न भिन्न ।
बदऊँ सीताराम पद जिन्हहिं परम प्रिय खिन्न ॥

हितेन सह वर्तते इति सहितं, सहितस्य भावः कर्म वा साहित्यम् । सहभावश्चाष्टादशविद्यानाम् । अत इवात्र कविकर्मणि सर्वाविद्याः परिसमात्यन्ते । तथा चोक्तम्—

स्व स्वाभिलाषादिव यत्र सर्वे विद्याविलासामिलिता लुठन्ति ।
तल्लोकवैदग्ध्यविधानयन्त्रं साहित्यतन्त्रं कलयन्ति कल्पा ॥

अत एव काव्यमीमांसायां—पञ्चमी साहित्यविद्या, स हि चतसृणामपि विद्यानां निष्यन्दः इति यायावरीयः । निष्यन्दः सार एव भवति स हि सर्वापेक्षया उत्कृष्टः । स च चमत्कार एव । अत एव सर्वाविद्या अङ्गभूता साहित्यञ्चाङ्गी । तथाहि—"शब्दार्थयोः शक्तिविशेषसत्त्वे लक्ष्येषु काव्यव्यवहारयोगात् । न्यायादिवद् दर्शनकोटिमाप्तुं साहित्यमङ्गीति वदन्ति विज्ञाः ।" इति हेतोर्यथा चैतन्ये निर्गते शरीरं शव इत्येवोच्यते, एवमेव सारभूतसाहित्यं विना सर्वाविद्या निष्फला एव । निष्यन्दभूतत्वात् सर्ववाङ्मयमत्र समाविष्टम् । अत एव भोजेन वाङ्मयं षड्विधं प्रदर्शितम्—

काव्यं शास्त्रेतिहासौ च काव्यशास्त्रं तथैव च ।
काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम् ॥

सहितस्य भावः साहित्यमिति व्युत्पत्या ज्ञानराशिरपि साहित्यशब्देन वक्तुं शक्यते । अत एव आचार्यमहावीरप्रसादद्विवेदिना—चिरसञ्चितो ज्ञानराशिरेव साहित्यशब्देन प्रतिपादितः । अस्मिन्नर्थे साहित्यशब्दस्य प्रयोगो जगदीशेन श्राद्धविवेक-

कारेण च विहितस्तथाहि—"परस्पर सापेक्षाणां तुल्यरूपाणां युगपदेव क्रियान्वयित्वं साहित्यम् ।"

तदिदं साहित्यं सर्वत्र ब्रह्मेव व्याप्तमस्ति, न हि किमप्येतेन विहीनम् । एतेन विहीनो देश. शव एवेति राष्ट्रकविमैथिलीशरणगुप्तेनोक्तम्—

अन्धकार है वहाँ जहाँ आदित्य नहीं ।
है वह मुर्दा देश जहाँ साहित्य नहीं ।।

साहित्यस्य सर्वव्यापित्वादेव भर्तृहरिस्तद्विरहितं साक्षात् पशुमेव मन्यते—

साहित्यसङ्गीतकलाविहीनः ।
साक्षात् पशुः पुच्छविषाणहीनः ।।

साहित्यसङ्गीतकलानामविच्छिन्नसम्बन्धाऽख्यं लौकिकसङ्गीतमपि साहित्य-सम्पन्नम्—

रतन कुवो मुँह साँकडो जीमें लम्बी आवे नेज ।
तेज गयो गुडल्यो गयो गयो भँवर को तेज ।।

एतमाश्रित्यैव कालीदासोऽपि—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधुनवमनास्वादितरसम् ।।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं ।
न जाने भोक्तारं किमिह समुपस्थास्यति विधिः ।।

इति स्मरति—परम्परया काव्यकारणतया लोकवृतस्य ।

केवलं प्रयोग साधुत्वपरे व्याकरणशास्त्रे समीक्षाप्रधानस्याभ्यान्तर्भावः मन्यमानानां मतं तु न समीचीनम् । यतो हि व्याकरणशास्त्रिण. शब्दानामपि औचित्यानौचित्यविवेकपूर्वकं प्रयोगकरणाय अस्य नितरामावश्यकत्वात् । एतेन व्याकरणशास्त्रस्येदं पुच्छत्वमति निरस्तम् । एतादृशस्य साहित्यस्य सर्जनाय सर्वैरपीदानीन्तनैः विद्वद्भिः प्रवृतिः विधेया । विदितमेव सर्वेषां विदुषां यत् साहित्यरसिकैः प्राक्तनै नृपैः साहित्यसृष्टृभ्यो धावकादिभ्यो स्वाश्रयं प्रदाय साहित्यस्य श्रीवृद्धिः कृताः । को न जानाति नितरां दरिद्रं मुकुण्डनामानं महाकविं यो हि पद्यमेकमेव संश्राव्य राजानं प्रभावितवान् । यथा प्राचीनसाहित्यपरम्परासु पद्यमिदं स्मर्यते—

भट्टिर्नष्टो भारविश्चापि नष्टो,
भिक्षुर्नष्टो भीमश्चापि नष्टः ।
भुकुण्डोऽहं भूपतिस्त्वं हि राजन्,
भम्भापंक्तावन्तकः सन्निविष्टः ।।

साहित्यस्य पाथोनिधित्वं प्रतिपादयता काश्मीरदेशवासिमहाकविबिल्हणेनास्य संरक्षणाय प्रयत्नोनुष्ठेयः इति विवेचितं विक्रमांकदेव चरिते—

साहित्य पाथोनिधिमन्थनोत्थं,
कर्णामृतं रक्षत हे कवीन्द्राः ।

यदस्य दैत्या इव लुण्डनाय,
काव्यार्थ चौराः प्रगुणी भवन्ति ॥

अयमेव च विक्रमांकदेवचरितेऽन्तिमे सर्गे एतदपि प्रतिपादितवान् यत् साहित्य-निर्मातृभिः सह विरोधोऽपि नानुष्ठेयः, संरक्षणीयाः हि कवयः । तद् यथा—

हे राजानस्त्यजत सुकविप्रेमबन्धे विरोधं,
शुद्धा कीर्तिः स्फुरति भवतां नूनमेतद् प्रसादात् ।
तुष्टैर्बद्धं तदलघुरघु स्वामिनः सच्चरित्रं,
रुष्टैर्नीतस्त्रिभुवनविजयी हास्यमार्गं दशास्यः ॥

तदैतस्य साहितस्य द्वैविध्यं सद्काव्यमसद्काव्यञ्च । सत्काव्यसेवनेन धर्मार्थ-काममोक्षाणां प्राप्तिर्भवति कलासु वैशिष्यञ्च प्राप्नोति । सद्पुरुषादिरहितं चरित्रमसत् साहित्यमित्युच्यते । तस्य सेवनेन न कश्चिदर्थः । अतएवास्य दोषरहितस्य साहित्य-स्योपादित्वमुक्तमालंकारिकैः । ग्राम्यदोषस्य वर्जनीयत्वमित्यपि प्रत्यपादि । एतादृशस्य साहित्यस्य अध्ययनं विदुषां मस्तिष्ककण्डूपशमनायावश्यकम् । अतएव महाकवेर्हर्षस्य नैषधीयचरितस्य साहित्यविषये—'नैषधं विद्वदौषधमिति आभाणकः प्राचलत्' ।

विवेचितञ्चैतद् साहित्यं नैकविधं, विविधानि साहित्यानि भारते प्रचलन्ति दरीदृश्यन्ते, तथा हिन्दीसाहित्यम्, उर्दू साहित्यम्, संस्कृतसाहित्यञ्चेति । विश्वस्य समस्तेष्वपि साहित्येषु संस्कृतसाहित्यं सर्वाण्यतिशेते । अत एव संस्कृतसाहित्य न केवलं भारतीया एव प्रशंसन्ति, किन्तु मोक्षमूलरप्रभृतयो वैदेशिका विपश्चितोऽपि अस्य मुक्त-कंठेन प्रशंसां चक्रुः । को न जानाति यूरोपदेशवास्तव्यं मोक्षमूलरं यो हि संस्कृत-साहित्यप्रभावेण नितरां प्रभावितोऽनेकानि कष्टानि सोढ्वापि द्वीपान्तरेभ्यः समागत्य भारतीयविदुषः संस्कृतसाहित्यमधीतवान्, प्राशंसच्च—

अमृतं मधुरं सम्यक् संस्कृतं हि ततोऽप्यधिकम्,
देवयोग्यमिदं यस्मात् देवभाषेति कथ्यते ।
न जाने विद्यते किं तत्माधुर्यमत्र संस्कृते,
सर्वदैव समुन्नता येन वैदेशिका वयम् ॥

शार्मण्य (जर्मन) देशवास्तव्यो महान्कवि गेटे कालिदाससाहित्यं श्रावं-श्रावं पाठं पाठञ्च नितरां संस्कृतसाहित्यभक्त समजनि इति नूनं संस्कृतसाहित्यस्य गरिमाणं द्योतयति । अन्येऽपि अनेके विपश्चिता नूनं संस्कृतगौरवं प्रतिपादयन्त अस्य सर्व-साहित्योपजीव्यत्वं स्वीचक्रुः । यथा अमेरिकादेशं वास्तव्यो हकसलाख्यो महानदार्शनिको विद्वान् भारतीय दर्शनानि अधिगम्य स्वभ्रान्तिं दूरीचकार, पाश्चात्य दर्शनस्यापि इदमेव मूलामिति प्रतिपादयामास । सर्वेषामपि साहित्यानाञ्चेदं मूलभूतमिति तु सर्वैरपि आधुनिकैरपि अङ्गीक्रियते, सर्वसाहित्यात्प्राक्तरः ऋग्वेदस्य रचना समजायत इत्यत्र न कस्यापि विप्रतिपत्तिः । भारतीयप्राचीनविद्वांसस्तु भगवतः परमात्मनो निश्वासभूताः सृष्टेः प्राग् आविर्भूता इति प्रतिपादयन्ति, एतेन वेदस्यापौरुषत्वं नितरां सिद्ध्यति ।

अनन्तपारञ्चेदमस्माकं साहित्यम् श्रूयते हि नितान्तप्रसिद्धतयेषु तक्षशिलाप्रभृति विश्वविद्यालयीय संस्कृतागारेषु संस्कृतविद्वेषपरायणैः प्रज्वलितोऽग्निः षड्मासपर्यन्तमपि न शान्तिमारूढत् । अनेन सुतरामनुज्ञातुं शक्यते यदस्माकं संस्कृतसाहित्यं कीदृशं विस्तृतमासीत् ।

अन्यञ्चेदं वैशिष्ट्यं संस्कृतसाहित्यस्य यत् यथा अनेन जनजागरण सम्पाद्यते न तथा अन्येन केनचित् साहित्येन, अत एव जनजागरणायास्य अध्ययनं नितान्तमावश्यकं वर्तते । भारतीयाणामिदं कर्तव्यं वरीवर्ते यत्ते संस्कृतसाहित्यमधीत्य राष्ट्रमुत्थापयितुं सततं प्रयत्नोऽनुष्ठेयुः । 'मनसा कर्मणा वाचा न राष्ट्रद्रोहमाचरेत्', 'वसुधैव कुटुम्बकम्', 'सर्वे भवन्तु सुखिनः' एतादृशा भाषा संस्कृतसाहित्यस्यैव गौरवं प्रकटयन्ति ।

एतादृशा विश्वजनीनभाषा नान्यत्र साहित्ये दरीदृश्यन्ते इति सर्वे जानन्त्येव । अतोऽस्याध्ययनं विधाय इदं विधेयम्—

निलम्पवाणीं समधीत्यलोकाः,
विदन्तु जीवात्मरहस्यतत्त्वम् ।
नाभेद बोधेन विना जगत्यां,
ब्रह्मैकवाक्यस्य भवेत्प्रचारः ॥

अस्याध्ययनेनैव इदानीन्तनो विभिषिकाक्रान्तो जनसमूहः शान्तिमधिगन्तुं समर्थो नान्यथा अतएव—

ब्रह्मैकवादेन विना न शान्तिः,
स साम्यवादस्य गुरुर्गरीयान् ।
तस्मात्परं क्षेमतरं न किञ्चित्,
वादाः परे तत्र भवन्ति लीना ॥

कर्तव्याकर्तव्य प्रवृत्तिनिवृत्ति उपदेशपरेणानेन संस्कृतसाहित्येन लौकिकमलौकिकं सर्वमपि प्रयोजनं संसाध्यते इति क्रियन्तं महिमानं वर्णयामः । अन्यानि साहित्यानि न तादृशमार्गप्रदर्शकानि, अत एव तानि मानवान् निश्चितमज्ञानान्धकारे पातयन्त्येवास्मिन् विषये नास्ति संदेहावसर । अतएव—

ये पापमाश्रित्य समुन्नतास्ते,
पतन्ति नूनं शिखराधिरूढाः ।
मुसोलिनी हिटलररावणानां,
निपात एवात्र परं प्रमाणमिति ॥

## 25

## काव्यस्यात्मा ध्वनिः ।

अथवा

## काव्यस्यात्मा तस्य गुणाश्च । (1983)

अथवा

## भाक्तमाहुस्तमन्ये । (1986)

ध्वनिशब्दो बहुधा निरुच्यते । निर्वचनानुसारं चास्य बहवोऽर्था गृह्यन्ते । पञ्चधा निर्वचनेन पञ्चापि ध्वनिसंबद्धा अर्था गृह्यन्ते । तद्यथा—(1) ध्वनति यः व्यञ्जकः शब्दो ध्वनिः । (2) ध्वनति, ध्वनयति वा यः स व्यञ्जकोऽर्थः ध्वनिः । (3) ध्वन्यते इति ध्वनिः । यद् ध्वन्यते इत्यनेन रसालंकरवस्तुरूपं व्यङ्ग्यार्थत्रयमुपतिष्ठते । (4) ध्वन्यते अनेनेति ध्वनिः, इत्ययेन व्यञ्जनादिशक्तीनां ग्रहणम् । (5) ध्वन्यतेऽस्मिन्निति ध्वनिः, इत्यनेन व्यङ्ग्यार्थप्रधानं काव्यमपि संगृह्यते। एवं ध्वनिशब्देन व्यञ्जकशब्दस्य, व्यञ्जकार्थस्य, व्यङ्ग्यास्य, व्यञ्जनाव्यापारस्य, व्यंग्यप्रधानकाव्यस्य च ग्रहणं संजायते ।

ध्वनेः स्वरूपम्—वाच्यार्थपेक्षया व्यंग्येऽर्थे मुख्ये सति ध्वनिरिति, कथ्यते । तथाविधं च काव्यं सर्वोत्कृष्टं मन्यते ।

इदमुत्तममतिशायिनि व्यंग्ये वाच्याद् ध्वनिर्बुधैः कथितः । (काव्यप्रकाश 1–4)
वाच्यातिशयिनि व्यंग्ये ध्वनिस्तत्काव्यमुत्तमम् । (सा० दर्पण 4–1)

आनन्दवर्धनाचार्यो ध्वनिं लक्षयति—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥
(ध्वन्यालोक 1–13)

यत्र शब्दार्थौ स्वार्थं गौणरूपेणोपस्थाप्य व्यंग्यमर्थम् अभिव्यञ्जयतः, तदा ध्वनिः । तथाविधं काव्यं ध्वनिः ध्वनिकाव्यं वा निगद्यते । शब्दार्थयोरेकस्य व्यञ्जकत्वे तदन्यस्य सहकारित्वं प्रतिपद्यते ।

शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः ।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥
(सा० दर्पण 2–18)

वाच्यार्थातिरिक्तः को ध्वनिः व्यंग्योऽर्थो वेति जिज्ञासायां ध्वनिकारेण स्फुरीक्रियते यत् कामिनीलावण्यमिव यत् प्रसिद्धातिरिक्तम् । अन्यदेव किंचित् प्रतीयते वाच्यातिरिक्तं व्यंग्यरूपं स ध्वनिः—

प्रतीयमानं पुनस्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
तत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावयमिवाङ्गना सु ॥
(ध्वन्या० 1–4)

एतदाश्रित्यैव लावण्यलक्षणमपि प्रस्तूयते यत्—

मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा ।
संलक्ष्यते यदङ्गेषु तल्लावण्यमिहोच्यते ।।

इयं व्यंग्यार्थबोधनक्षमतैव प्रतिभावैशिष्ट्येन महाकवीनां यशः प्रचारयति । व्यंग्यार्थाभिव्यक्तिरेव महाकवित्वस्य निकषः । अतो ध्वनिकृतोच्यते—

सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ।।

व्यंग्यार्थस्य तथा वैशिष्ट्यं यथैष नीरसं सरसम्, असुन्दरं सुन्दरम्, अमधुरं मधुरं जनयति ।

ध्वनिसिद्धान्तस्य स्थापना व्याकरणं विशेषतो भर्तृहरिकृतं वाक्यपदीयमाश्रित्य वर्तते । वाक्यपदीये नादस्फोटयोः स्वरूपं निरूप्यते—

यः संयोगविभागाभ्यां करणैरुपजन्यते ।
स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः ।।

(वाक्यपदीय 1–103)

तत्रोच्चारणावयवानां संयोगेन च य शब्द उत्पद्यते स स्फोटः, अन्ये च शब्दजाःशब्दाः ध्वनिशब्दवाच्याः । घण्टानादादिषु अनुरणनरूपः शब्दो यथा, तथैव शब्दजो व्यंग्योऽर्थो ध्वनिरित्युच्यते । स्फोटनादयोः व्यंग्यव्यंजकसम्बन्धो मन्यते, तथैव काव्येऽपि ध्वनेर्व्यञ्जकत्वं प्रतीयमानस्यार्थस्य च व्यंग्यत्वं सिध्यति—

ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा ।
व्यंग्यव्यञ्जकभावेन तथैव स्फोटनादयोः ।।

नादैराहितबीजायां बुद्धौ अन्त्यवर्णश्रवणेन समं शब्दस्य रूपमवधार्यते । ध्वनिरेव शब्दस्वरूपं प्रकाशयति—

नादैराहितबीजायामन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ।। (वाक्यपदीय 1–85)
प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणै स्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ।। (वाक्यपदीय 1–84)

स्फोटव्यञ्जका वर्णाः ध्वनिनाम्ना व्यवह्रियन्ते, एवं व्यञ्जकशब्दार्थयोः ध्वनित्वं सिध्यति । लोचनकृताः अभिनवगुप्तेन ध्वने पञ्चस्वरूपार्थं व्याकरणस्य ऋणित्वं स्वीक्रियते । अतएव आनन्दवर्धनाचार्येण मम्मटेन च वैयाकरण प्रशंसाया-मुच्यते—

"प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम् । ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति ।" (ध्वन्या० 1–13)

"बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यंग्यव्यंजकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः ।" (काव्यप्रकाश 1–4)

ध्वनिरात्मा काव्यस्य—अभिधा-लक्षणा-व्यापारान्तरं व्यञ्जनावृत्तिः स्वीक्रियते। व्यञ्जनायाः प्राधान्येन काव्ये कल्पनायाश्चिन्तनस्यानुभूत्यादितत्त्वानां च समावेशोऽभूत्। कल्पनाया अभावे लक्षणाया व्यञ्जनाया वा प्रवृत्तिर्न प्रसरति। नानुभूतिं विना भावावेशः, भावावेशमन्तरेण न लक्षणा व्यञ्जना वोद्भवति। व्यञ्जना-शक्तिः काव्ये प्रभविष्णुतां रमणीयतां रागात्मकतां च सन्निवेशयति। तदेव काव्ये रमणीयत्वं जायते।

क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः॥ शिशु० 4–17॥

तादृशी रमणीयता काव्ये व्यञ्जनाशक्तेः ध्वनेर्वा संजायते। यथा रमणीशरीरे लावण्यम्, मेघे विद्युत्, चन्द्रमासि ज्योत्स्ना, उषसि ज्योतिर्वाऽन्तर्निहिता तथैव काव्ये ध्वनेरधिष्ठानम्। ध्वनितत्त्वं न काव्यस्यावयवरूपम्, अपितु अवयविरूपेण आत्मरूपेण वा प्रतिष्ठयति।

काव्यशास्त्रे अभिधा लक्षणा व्यञ्जना चेति तिस्त्रो वृत्तयः स्वीक्रियन्ते। अभिधा वाच्यार्थप्रधाना, लक्षणा लक्ष्यार्थप्रधाना, व्यञ्जना व्यंग्यार्थप्रधाना च। व्यञ्जाशक्तेः स्वीकरणे ये दोषा विविधैः शास्त्रज्ञैरुद्भाविताः ते दोषा आनन्दवर्धनेन ध्वन्यालोके मम्मटेन च काव्य प्रकाशे निरस्ता। उक्तं च—

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया॥
नाभिधा समयाभावात् हेत्वभावान्न लक्षणा।
विरतास्वभिधाद्यासु ययार्थो बोध्यते परः।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च॥

व्यञ्जना द्विविधा—शाब्दी आर्थी च। तत्र शाब्दी द्विधा—अभिधामूला लक्षणामूला च। आर्थी व्यञ्जना च वक्तृबोद्धव्यादीनां वैशिष्ट्याद अन्यदर्थं बोधयति।

**ध्वनेर्भेदा—**

ध्वनेर्मुख्यतया द्वौ भेदौ स्तः –(1) लक्षणामूलोः ध्वनिः, अविवक्षितवाच्यध्वनिर्वा। (2) अभिधामूलो ध्वनिः विवक्षितान्यपरवाच्यध्वनिर्वा। लक्षणामूले ध्वनौ वाच्यार्थस्य विवक्षा प्रयोजन वा न भवति। व्यंग्यार्थो लक्ष्यार्थमाश्रित्यावतिष्ठते। अस्यापि द्वौ भेदौ—अर्थान्तरसंक्रमितवाच्यध्वनिः, अत्यन्ततिरस्कृत-वाच्यध्वनिश्च। अर्थान्तरसंक्रमिते वाच्यार्थः स्वार्थं बोधयत्वपि अर्थान्तरं संक्रामति। अत्यन्ततिरस्कृते वाच्यध्वनौ च वाच्यार्थः सर्वथा तिरस्क्रियते। लक्षणामूलश्चैष ध्वनिः।

अभिधामूले विवक्षितान्यपरवाच्ये ध्वनौ वा व्यंग्यार्थो वाच्यार्थम् आश्रयते। अस्यापि द्वौ भेदौ—संलक्ष्यक्रम-व्यंग्यध्वनिः, असंलक्ष्यक्रम-व्यंग्यध्वनिश्च। संलक्ष्यक्रमे व्यंग्यध्वनौ व्यंग्यार्थ-प्रकाशस्य पौर्वापर्यक्रमो लक्ष्यते। असंलक्ष्यक्रमे व्यंग्यध्वनौ च शतपत्रभेदन्यायेन पौर्वापर्यं न लक्ष्यते। तत्र सत्यपि पौर्वापर्यं यौगपद्यात् न तत्र क्रमज्ञानम्। द्वयोरप्येभेदयोरनेके भेदा वर्ण्यन्ते।

गुणीभूतव्यंग्ये वाच्यार्थापेक्षया व्यंग्यार्थस्य नाधिकं महत्त्वम् । जगन्नाथेन गुणीभूतव्यङ्ग्यं काव्यमपि उत्तमकाव्यान्तर्गतं स्वीकृतम् । अस्य अगूढ़अपराङ्गव्यंग्यादि-भेदेन अष्टौ भेदाः ।

काव्यं त्रिविधिम्—ध्वनिवादिमतेन काव्यं त्रेधा विभज्यते—उत्तमं मध्यमम—वरञ्चेति । व्यंग्यार्थस्य प्राधान्ये काव्यमुत्तमम् । "वाच्यातिशायिनिव्यङ्ग्ये ध्वनि-स्तत्काव्यमुत्तमम्" (सा०द० 4–1) । उत्तमकाव्यस्यापि भेदत्रयम्-रसध्वनिः, अलंकार-ध्वनिः, वस्तुध्वनिश्च । तत्र रसध्वनिः सर्वोत्तमः । गुणीभूतव्यंग्यं काव्यं मध्यमम् । "अतादृशि गुणीभूतव्यंग्यं व्यंग्ये तु मध्यमम्" (काव्य० 1–5) । अत्र व्यंग्यार्थस्य सत्त्वेऽपि वाच्यार्थापेक्षया तस्य गौणत्वं भवति । अधम काव्ये अवर काव्ये वा शब्द-चित्रादिकमलंकारप्रदर्शनादिकं च भवति । अत्र रसाभावाद स्वाधमत्वत् । "शब्दचित्रं वाच्यचित्रमव्यंग्यं त्ववरं स्मृतम्" (काव्य० 1–5) ।

ध्वनिवादस्य महत्त्वस्य कारणं यदत्र सर्वेषामपि काव्यमूलतत्त्वानां रसालंकार-वक्रोक्त्यादीनां समावेशो भवति । अत्र रीतिवादवद् न केवलं पाण्डित्यप्रदर्शनम्, अपितु चित्ताह्लादकत्वं चेतोविकासत्वं च भवति । ध्वनिवादस्य समणीयत्वं शब्दशूलकम्, अर्थमूलकं शब्दार्थोभयमूलकञ्च । ध्वनिः काव्ये ललनालावण्यवद् अपूर्वं रम्यत्वं प्रतीय-मानामर्थं च द्योतयति । खण्डनमण्डनादिभि पुष्टः सर्वमान्योऽयं काव्यसिद्धान्तः । नैतादृशः काव्यसिद्धान्तोभुवनेऽन्यत्रावलोक्यते । अतएवैतस्येयत् महत्त्वम् । एवं सिध्यति यद्—'ध्वनिरात्मा काव्यस्य' ।

## 26

**न हि रसादृते कश्चिदप्यनर्थः प्रवर्तते।** (1985)

अथवा

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।** (1985)

कोऽयं रस इति चेत्, यो रस्यते-आस्वाद्यते स एव रसः । एवञ्चानेन रसपदस्य निर्वचनेन आस्वादभूतो य सः एव रसपदवाच्यः । वासनारूपेण स्थिताः स्थायिभावाः विभावाद्यैः सह अनुकूल परिस्थित्यां प्राकट्य लभन्ते । ते स्थायिभावाः रसतां प्राप्नु-वन्ति । यतो हि कथितमाचार्यमम्मटमहाभागेन—"व्यक्तः स तैर्विभावाद्यैः स्था.िभावो रस. स्मृतः" इति ।

रसास्वादः कया रीत्या जायते, कानि साधनानि सन्ति यानि रसं निष्पाद-यन्तीति चेत्, अस्मिन् विषये चिरन्तनेन मुनिना भरतेन सर्वतः प्रथममनेन सूत्रेण प्रतिपादितम्—"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पति" इति । वासनारूपतयाति-सूक्ष्मरूपेणावस्थितान् रत्यादीन् स्थायिन अनुभावयन्ति अनुभवविषयीकुर्वन्तोति अनुभावाः, सम्यक् रत्यादीन् कामे चारयन्ति संचारयन्ति मुहुर्मुहुरभिव्यञ्जयन्तीति वा

व्यभिचारिण इति । एवञ्चैतेषां संयोगात् रसनिष्पत्तिर्भवतीति व्याख्यातं भरतेन । विभावानुभावव्यभिचारिण एते त्रय एव सम्मिलितरूपेण दध्यादिन्यायेन रसरूपेण परिणमन्ते, यथा—दुग्धमम्लयोगात् दधिरूपेण परिणम्यात्मानं दधित्वेन व्यनक्ति तथैव । उक्तं हि दर्पणकारविश्वनाथेन—

विभावेणानुभावेन व्यक्तः संचारिणा तथा ।
रसतामेति रत्यादि स्थायिभावः सचेतसाम् ॥

सचेतसामित्यनेन च ये काव्यवासनावासितान्तः करणा सन्ति, ते एवायमास्वादयन्ति नेतरे नैयायिकाः मीमांसकाश्च । अतएव विश्वनाथेन निर्वासना काष्ठकुड्याश्मसन्निभा इति ।

इदमेव भरतसूत्रं भट्टलोल्लटशंकुकभट्टनायकाभिनवगुप्ताचार्यप्रभृतिभिः विद्वद्भिः स्वीयं स्वीयं मतं विविधरूपेण प्रकटयाचक्रु । मतानि प्रधानानि तेषां भट्टलोल्लटशंकुकभट्टनायकाभिनवगुप्ताचार्याः नामान्यवगन्तव्यानि । रससम्प्रदायश्चैतेषामेव मतमादाय साम्प्रतं प्रचलति । भट्टलोल्लटस्यायमभिप्रायः—यथा असत्यपि सर्पे सर्पतयावलोकितात् दाम्नोऽपि भीतिरुदेति तथा सीताविषयिणी अनुरागरूपा रामरतिरविद्यमानापि नर्तके नाट्यनैपुण्येन तस्मिन् स्थितेव प्रतीयमाना सहृदयहृदये चमत्कारमर्पयन्त्येव रसपदवीमधिरोहतीति । परञ्चास्य मतस्यायुक्त त्वमेव प्रतिपादितं विद्वद्भि, यतोह्यस्मिन् मते अनुकार्ये रामादावेव रसनिष्पत्या, सामाजिके रसास्वादो न स्यादिति मतामिदं नादरणीम् ।

रसप्रसंगविषये नैयायिकस्य श्रीशंकुकस्येदमाकूतम्—यथा कुज्झटिककुलितदेशेऽसतोऽपि धूमस्याभिमानात् धूमनियतबह्वेरनुमानं तथा नटेनैव सुनिपुणं 'ममैवैते विभावादय' इति प्रकाशितैस्तत्रासद्भिरवि विभावादिभितन्नियता रतिरनुमीयमाना निजसौन्दर्यबलात् सामाजिकानामास्वाद्यमानतया चमत्कारमादधती रसतामेतीति रतेरनुमितिरेव रसनिष्यतिरिति । यथा बालानां चित्रतुरगे वस्तुपरिच्छेदशून्या तुरगोऽयमिति बुद्धिर्भवति तथा रामोपमितिप्रतिपत्या ग्राह्ये नटेऽपि प्रति परञ्च प्रत्यक्षमेव चमत्कारजनकं नानुमित्यादिरिति लोकप्रसिद्धि विरोधस्य विद्यमानत्वेनेदमपि गजपिपीलिकाप्रायम् ।

भट्टनायकस्तु भरतसूत्रमनेन प्रकारेण व्याख्यायमानशब्दस्याभिधारूपव्यापारवत् काव्यनाट्ययोस्तद् विलक्षणभावकत्वभोजकत्वनामकं व्यापारद्वयमतिरिक्तमस्ति । काव्यबोधोत्तरमेव तत्राद्येन भावकत्वव्यापारेण विभावादिरूपसीतादयो रामसम्बन्धीरतिश्च सीतात्व रामत्व सम्बन्धांशमपहाय सामान्यतः कामिनीत्वरतित्वादि नैवोपस्थाप्यते । अन्त्येन भोजकत्वव्यापारेण तु उक्तरीत्या साधारणीकृतविभावादिसह सा रतिः सहृदयैरैवास्वाद्यते, अत एव असत्यामपि रतेरास्वादः आलौककत्वादुपपन्नमिति रतेरास्वाद एव रसस्यनिष्पत्तिरिति विचारणादौ विचारेण प्रतिपादितम् । एवञ्चास्मिन् मते भरतसूत्रस्य विभावादिसंयोगात् भोजकभोज्यभावसम्बन्धात्

भट्टनायकमते भावकत्वभोजकत्व व्यापारद्वयकल्पने यद् गौरवं प्रमाणाभावश्चेति नास्यं मतस्यापि मुक्तिमुक्तत्वात् प्रतिपादयन्ति मार्मिकाः।

व्यञ्जनावादिनोऽभिनवगुप्ताचार्यस्य रसविषयेऽयमभिप्राय -विभावानुभावव्यभिचारिभिः रसचर्वणा सामाजिकहृदये भवति। पूर्वोक्तभावकत्वभोजकत्वव्यापारयोः रामसीतादिविशेषांशपरिहारेण रतिकारणसाधारणकामिनीत्वादीनां प्रतीतैः विभावादिभिः सहृदयहृदयावस्थिता सा रतिर्व्यञ्जनया अभिव्यक्ता सामाजिकानामास्वाद्यं आयातीति एतादृशः आस्वादः एव रसनिष्पत्ति इति। एतस्यामवस्थायामानन्दस्यानुभवं सहृदयी एव करोतीति। रसशास्त्रालंकार शास्त्रयोर्मध्ये मतमिदं दार्शनिकमनोवैज्ञानिकानामाधारमिति हेतुनापि अधिकं प्रसिद्धत्वमुपगतम्। इदमेव मतं प्रकाशकारेणापि 'इतिश्रीमदाचार्याभिनवगुप्तपादाः' इत्युक्त्वा स्वीकृतम्।

रसस्य कतिभेदाः सन्ति? आलंकारिकाणामस्मिन् विषये नास्त्येकमत्यम्। यथा नाट्यशास्त्रप्रणेतामुनिना भरतेन नाट्यशास्त्रे—'शृंगार-हास्य-करुण-रौद्र-भयानक-वीभत्स-अद्भुताश्चेत्यष्टौ रसाः स्वीकृताः'। तथास्य प्रामाणिकतायां एषा कारिकाऽपि विलिखिता—'एते ह्यष्टौ रसाः प्रोक्ताः द्रुहिणेन महात्मना।' एतन्मतमङ्गीकुर्वन् मम्मटाचार्योऽपि काव्यप्रकाशे निक्षिप्तवान्—

शृंगार-हास्यकरुणदौद्रवीरभयानकाः।
वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥

कँश्चित् अनादिकालादागतानां रागद्वेषादीनां नाशासम्भवात्, सर्वकार्यविरामरूपत्वेन नाटके प्रयोजनाभावात् शान्त रसो न स्वीक्रियते। यथा हि दशरूपककारणेन धनञ्जयेनोक्तम्—'शममपि केचित्प्राहु पुष्टिर्नाट्येषु नैतस्य'। यतो हि नटे रसाभिव्यक्तिस्वीकारात् सामाजिकानां फलशमत्वेन तत्र रसोद्बोधेबाधकाभाव इति शान्तरसपक्षणापातिनो मम्मटाचार्यस्याभिप्राय। एतदनुसारेण मम्मटोऽपि 'शान्तोऽपि नवमो रस' स्वीकृतवान्। अत एव ध्वनिवादिआनन्दवर्धनाचार्यै महाभारते मूलरसः शान्त एवाङ्गीक्रियते। रसविरोधिनां वर्तमानत्वे सामाजिकेषु शान्तरसोद्रेको न भवितुमर्हतीति शंका न विधेया, यतो नाट्ये शान्तरसं वाञ्च्छद्भि फलत्वेन गीतवाद्यादेः शान्तेः विरोधिताया शान्तोद्रेके नास्ति कश्चन प्रतिबन्धः, इत्येतत्सर्वविस्तरेण रसगंगाधरे प्रतिपादितम् यतोहि—विषयचिन्तासामान्यस्य तत्र विरोधित्वस्वीकारे तदीयासम्बन्धस्य संसारनित्यत्वास्य तदुद्दीपनस्य पुराण-श्रवण-सत्संग-पुण्यवन-तीर्थावलोकनादेरपि विषयत्वेन विरोधित्वायत्ते। यथा 'संगीतरत्नाकरे' प्रतिपादितम्—

"अष्टावेव रसा नाट्येष्विति केचिदचूचुघन्।
तदचारु, यतः कंचिन्तन्न रसं स्वदते नट॥"

अत एव नाट्येऽपि शान्तरसः स्वीकृतः।

अथकथमेत एव रसा, ननु धार्मिकप्रवचने भगवद्भक्तैरनुभूयमानभक्तिरस्यापि सौरांगदिभिः स्वीकारात् कथं नव एव रसा इति न शंकनीयम् यतो हि रतिर्देवादि-

विषयाभाव इति मम्मटाचार्योक्तिरीत्या भक्तिरसभावान्तर्गतया तस्य रसत्वदोषौ अनङ्गीकरणादिति प्रतिपादितं रसगंगाधरे पण्डितराजेन जगन्नाथेन।

एतेषु काव्यमर्मज्ञैः विद्वद्भिः स्वीकृतेषु कस्य रसस्य प्राधान्यं वर्तते ? कः रसः मुख्य रसः ? वा रसराजस्य संज्ञा वोढुं समर्थः ? इति विषये काव्यकाराणां विविधानि मतानि दरीदृश्यते। सामान्यतस्तु विदुषां बहुलवर्गेण शृंगाररसस्यैव प्रधानता स्वीकृता अस्ति अतः स एव रसराजस्य गौरवं लभते। कालिदासेन अभिज्ञानशाकुन्तले भ्रमराक्रान्तायां शकुन्तलायाः स्थितिः वर्णिता—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं,
रहस्याख्यीय स्वनसिमृदुकर्णान्तिकचरः।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषा-मधुकर ! हतास्त्वं खलु कृती॥

विप्रलम्भशृंगारवर्णनेऽपि सिद्धसारस्वतकविना कालिदासेन 'मेघदूते' मार्मिकवर्णनं व्यवस्थापितम्—

तन्वी श्यामाशिखरिदशनापक्वबिम्बाधरोष्ठी,
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसदगमना स्तोकनम्रास्तनाभ्यां,
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातु॥

किं बहुना ! शृंगाररस्तु सर्वप्राणिनां जीवधर्म एव। अत्र सत्यमेवोक्तं कालिदासेन—

शृंगारी चेत् कविकाव्ये जातं रसमयं जगत्।
स एव वीतरागश्चेत्तीरसं सर्वमेव तत्॥

करुणरसाचार्यमहाकविना भवभूतिना तु 'करुण एव रसः' इति प्रतिपादितम्। यथैकमेव जलमार्वतबुद्बुद्तरंगरूपाभवस्थाविशेषान् प्रतिपद्यते, परञ्च निमित्तभेदात् भिन्नरूपतां प्रतिपद्ययन्ति नाना संज्ञा भजते। यथा हि—

एको रसः करुण एव निमित्तभेदात्,
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान।
आवर्त बुद्बुद्तरंगमयान् विकारान्,
अम्भो यथा सलिलमेव हि तत्समस्तम्॥

न च रसस्यानन्दमयत्वाङ्गीकारे करुणरसस्य रसत्वं हानिरिति शंकनीयम्, तत्रापि आलंकारिकैरानन्दस्वीकारात्। अन्यथा करुणरसप्रधाने भवभूतिविरचिते उत्तररामचरिते सचेतसामध्ययनप्रकृतिः साधीयसी न स्यात्। तत्र सान्निनिवेशप्रवृत्तिरनेन विज्ञायते यत्र करुणरसस्यापि आनन्दमयत्वम्, एतदेव संसाधितं विश्वनाथेन—

"सचेतसामनुभवः प्रमाणं तत्र केवलम्॥"

करुणरसस्यानन्दयमयत्वानङ्गीकारे रामायणादिमहाकाव्येऽपि दुःखहेतुत्व-प्रसङ्गः न च रामायणस्य दुःखहेतुत्वादिति, सर्वेषामपिसम्मतमतम् एवं शंकितं विश्वनाथेन—

"तथा रामायणादीनां भविता दुःखहेतुता।"

काव्ये सर्वत्र अलंकारगुरीत्यादिषु प्राधान्यमुखीकृतम्। यथा शरीरे आत्मनः प्राधान्यं तद्वत् रसस्यापि। अत एव सरसवाक्यप्रपिपादनस्य वैशिष्ट्यम् आलंकारि-काणामन्यैषां वा, अत एव काव्यप्रयोजनप्रतिपादनप्रसङ्गे मम्मटाचार्येण—सरसता-पादनेन अभिमुखीकृत्य रामादिवत् वर्तितव्यम् न रावणादिवदिति उक्तम्। अत एव च श्रीमता आनन्दवर्धनाचार्येण ध्वन्यालोके त्रिविधिषु वस्त्वलंकाररसविधेषु ध्वन्यात्मक-काव्येषु रसध्वन्यात्मक काव्यस्वप्राधान्यङ्गीकृतम्।

यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवे।

महाराष्ट्रदेशवासितव्यानामनंगानां कुचकलशवदतिगौरवं व्यञ्जनाप्रतिपाद्य-त्वञ्चापि महता डिंडिमघोषैण स्वीकृतम्। एतदेव सर्वं ध्वन्यालोकस्य प्रसिद्धतये अभिनवगुप्ताचार्यविरचिते आलोकस्य टीकाग्रन्थे 'न मरहट्टवधूकुचाभः' इत्यादिना प्रत्यपादि।

अत एव रसस्य स्वशब्देनाविष्करणं प्रत्युतदोष इत्येवं प्रतिपादकेन प्रकाश-कारेण रसस्य व्यङ्ग्यत्वं नितरां प्रसादितं भवति, अत एव—

"रसस्योक्तिः स्वशब्देन स्थायि संचारिणोरपि।"

एतादृशि आनन्दमयस्वरूपविवेकिन मुक्तारपि भवतीति अहो वैशिष्ट्यम् सरस-काव्यमहिम्ना, अत एव विश्वनाथेन— वाक्यं रसात्मकं काव्यमिति गदितम्। रसात्मक-काव्यस्यात्र प्रयोजनं धमार्थकाममोक्षरूपाणां चतुर्विधानां फलानां प्राप्तिरिति, धर्मार्थ-काममोक्षप्राप्तये सर्वैरपि सरसताप्रतिपादने यत्नोऽनुष्ठेयः।

आनन्दमयश्चायमेव परब्रह्मरूपतां भजते, यतो हि उपनिषदि ब्रह्मस्वरूपप्रति-पादनप्रसङ्गे—'आनन्दो ब्रह्म, आनन्दादेव खल्विमानि भूतानि जायन्ते इति निर्णीत्तम्। अत एव रसो वै सः, रस एवायं लब्ध्वानन्दी भवतीति श्रुतिषु प्रतिपादितम्। अयमेव तमोगुणरजोगुणविमुक्तः, सत्वगुणप्रधानात्मप्रकाशेन प्रकाशमानः प्रमाणकरसवदा-स्वाद्यते, अतः अखण्डः आनन्दस्वरूपः चिन्मयः स्पर्शशून्यः, ब्रह्मैव आस्वाद्यते प्रमातृभिः, अतः ब्राह्मणः सहोदरः, अलौकिकः स्वाकारयुक्तः, अभिन्नः इति। अतः रसस्यानन्द-स्वरूपत्वङ्गीकृतमालंकारिकैः तथा न केवलमानन्दमयत्वभेवापितु यथा विवेकस्य स्वप्रकाशत्वं संसाध्यते वेदान्तिमिस्तद्वदेव रसस्यापि स्वप्रकाशत्वं संसाधितम्। यथा साहित्यदर्पणे विश्वनाथेन प्रतिपादितम्—

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥
लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥

## 27

## ग्रौचित्यसिद्धान्तप्रवर्तक: क्षेमेन्द्र:।

ग्रथवा

**ग्रौचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्।** (1984)

ग्रथवा

**ग्रनौचित्याद् ऋते नान्यद् रसभङ्गस्य कारणम्।** (1986)

विदितमेव समेषां यदस्याचार्यक्षेमेन्द्रस्य संस्कृतसाहित्ये विशिष्टं स्थानम्। महाभागेनानेन स्वकीयग्रन्थे स्वस्य परिचयोऽपि प्रदत्त:, तदनुसारेणैवास्य जीवनविषये किञ्चिद् ज्ञातुं शक्यते। क्षेमेन्द्रवंशधरा प्राचीना: काश्मीर प्रदेशवास्तव्यानां राज्ञां ग्रमात्यपदे प्रतिष्ठिता ग्रासन्। ग्रस्य जनक: प्रकाशेन्द्र:, पितामह: सिन्धुश्च नितातं ख्यातिगंत: पारदृश्या विद्वान् ग्रासीत्—

काश्मीरेषु बभूव सिन्धुरधिक: सिन्धोश्च निम्नाशय:,
प्राप्तस्तस्य गुणप्रकर्षयशस: पुत्र प्रकाशेन्द्रताम्।
विपेन्द्र प्रतिपादितान्नधभृगोसंघकृष्णाजिनै:,
प्रख्यातिशयस्य तस्य तनय क्षेमेन्द्र नामाभवत्॥

बृहत्कथामञ्जर्यां विवेचियं यदनेन क्षेमेन्द्रेण ग्रभिनवगुप्ताचार्यात् साहित्यशास्त्रस्वाध्ययनं कृतम्। यथा—

ग्रभिनवगुप्ताख्यात् साहित्यं बोधवारिधे:।
ग्राचायार्यशेखरमणेस्साधु विद्यादिवृत्तिकारिण:॥

क्षेमेन्द्रोऽयं पूर्वं ग्रभिनवगुप्ताचार्यमतानुसारी शैव ग्रासीत्, परञ्चाग्रे सोमाचार्यप्रभावप्रभावित: क्षेमेन्द्रो वैष्णवत्वं स्वीचकार। ग्रनेन स्वीयासु कृतिषु वेदव्यासस्य काव्यमुपजीव्यैव वैशिष्ट्यं प्रकटितम्, ग्रत एवानेन स्वस्योपनाम व्यासदास इति लिखितम्, यथा—

इत्येष विष्णोरवतारमूर्ते: काव्यामृतस्वादविशेषभक्त्या।
श्रीव्यासदासान्यभिधेयेन क्षेमेन्द्रनाम्ना विहित:॥

क्षेमेन्द्रकालस्यविषये कश्चन विशेषविवादो न वर्तते, यतोहि स्वग्रन्थेषु समकालिक नृपाणां नामसभुटंकितम्, तदनुसारं काश्मीरशासकान्तकलशयो: समये ग्रनेन स्वीकीया कृतिर्निमिता।

पी० बी० काणे इति मतानुसारमनेन चत्वारिंशदधिकग्रन्थानां ग्रनेन रचना विहिता, परञ्च तेषु ग्रौचित्यविचारचर्चाकविकण्ठाभरणयो: विशिष्टं स्थानं वर्तते।

ग्रौचित्यविचारचर्चायां क्षेमेन्द्रेण ग्रौचित्यसम्प्रदायस्य स्थापना कृता। क्षेमेन्द्रस्यानुसारमौचित्मेव रससिद्धकाव्यस्य प्रमाणभूतं त्वमिति नास्तिसंदेहावसर:। यथा—

अलंकारास्त्वलंकाराः गुणा एव गुणाः सदा ।
औचित्यं रससिद्धस्य स्थिरकाव्यस्य जीवितम् ।।

(औ० चि० का० 5)

औचित्यंकिमिति जिज्ञासायाम्—

उचितं प्राहुराचार्याः सदृशं किल यस्य तत् ।
उचितस्य यो भावस्तदौचित्य प्रचक्षते ।।

अयमभिप्रायः—प्रत्येकं वस्तुन स्वस्यस्थाने विन्यासेनैव शोभाजायते नान्यथा, यथा कटिशोभाविधायिका मेखला कटिदेशे न परिधाय यदि कण्ठे ध्रियेत, तर्हि सा न कामपि शोभां न विधास्यति अपितु उपहासास्पदा एव भविष्यति एवमेव औचित्यं बिना गुणालंकारविन्यासो न भावुकाभ्यो रोचते । यथा—

कण्ठे मेखलया नितम्बफलके तारेण हारेण वा ।
पाणौ नूपुरबन्धेनेन चरणे केयूरपाशेन वा ।।
शौर्येण प्रणते रिपौ करुणया नायान्तिके हास्यताम् ।
औचित्येन विना रुचिं प्रतनुते नालंकृतिर्नो गुणाः ।।

औचित्यस्य क्षेत्रं आचार्येण विस्तारेण निरूपितम् औचित्यविचार चर्चायाम्, यथा—

पदे वाच्ये प्रबन्धार्थे गुणेऽलंकरणे रसे ।
क्रियायां कारके लिङ्गे वचने च विशेषणे ।।
उपसर्गे च निपाते च काले दशे कुलेव्रते ।
तत्त्वे सत्वेऽप्यभिप्राये स्वभावे सारसंग्रहे ।।
प्रतिभायामवस्थायां विचारे नान्यथाशिषि ।
काव्याङ्गेषु च प्राहुरौचित्यं व्यापि जीवितम् ।।

अनेन प्रकारेण औचित्यस्य क्षेत्रं संकुचितं किन्तु सर्वथा विस्तृतम् । पदवाच्य-प्रबन्धेष्वौचित्यानां सम्बन्धो मीमांसादर्शनेन वर्तते । एवमेव गुणालंकाररसानामौ-चित्यञ्च साहित्यशास्त्रेण सम्बद्धं वर्तते । क्रियाकारकलिङ्गवचनविशेषणोपसर्गाणाञ्च व्याकरणशास्त्रेण कृतसम्बन्धो वर्तते । अर्थात् लोकानुसारेणैवेषां विन्यास औचित्यं भजते नान्यथा । अन्येषामवशिष्टानां तत्त्वसत्वाभिप्राय—स्वभावसारग्रहप्रतिभावस्था-विचारनामाशीर्वादानां विन्यासः कविस्वेच्छानिर्भरभवति । इत्थञ्च औचित्यं विना न कश्चन स्वकृतौ सफलत्वं भजते । अत एव सत्यमेव प्रचलितम्—

"औचित्यं काव्यजीवितम् ।" इति ।

## 28
## अलङ्कारशास्त्रमिति नामकरणे तथ्यम्।
अथवा
## सौन्दर्यमलङ्कारः।                                        (1986)

भारतवर्षे विशिष्टा मम्मटाचार्यतुल्याः समुद्भूटा आलंकारिकाः संजाता इति नातिरोहितं विदुषाम्। मम्मटाचार्यविरचित 'काव्यप्रकाशः' काव्यस्य निर्माणे स्वरूप-दोषगुणालंकारादीनामवधारणे च अनुपमो निबन्धः। यथा च व्याकरणं भाषायां व्युत्पत्त्यै अपेक्षते, तथालंकारशास्त्रमपि काव्ये नैपुण्याय सर्वथा अवश्यञ्चापेक्ष्यते। ने केवलमलंकारशास्त्रं विना काव्ये नैपुण्यमेव न भवति, अपितु काव्यदोषदृष्टिरपि न जायते। यो हि अलंकारशास्त्रं न जानाति केवलं व्याकरणादिकमेव जानाति स कथं जानीयात् "चिन्तारत्नमिव च्युतोऽसि" 'गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णव' इति चानयोस्तुल्येऽपि उपमानोपमेययोर्लिङ्गभेदे पूर्वं दुष्टं न परमिति। एवमेव जघन-काञ्चादिपद कर्णावतंसादिपदयो अविशिष्टेऽपि पौनरुक्त्ये पूर्वं दुष्टं परमदूष्टमिति निश्चितव्यम्। तस्मादलंकारशास्त्रमपि व्याकरणवदवश्यमेवाध्येतव्य श्रेण्यां समायाति।

अवश्यमध्येतव्यश्रेष्यां प्राक्स्थामिदमलंकारशास्त्रं •प्रथमं कदा केनाविष्कृतमिति न निर्णेतुं शक्यमस्माभि। परञ्च प्रसिद्धेषु सर्वेषु अलंकार निबन्धेषु कालिदासकृते-रुद्धरणात् कालिदासादुत्तरकालमेवास्य बाहुल्येन चर्चा अजनीति संभाव्यते।

अत्र तथ्यनिर्णये प्राचीनविदुषामभिमतस्य पर्यालोचनं मन्ये साधकं संभवेदिति। दण्डिना भामहेन वा शास्त्रं प्रथममाविष्कृतम्। ताभ्यां प्राक्तनस्यालंकारशास्त्रनिर्मातु-रनुपलंभात्। तयोः परमप्राचीनत्वञ्च काव्यप्रकाशादिषु स्फुटमेव। अग्निपुराणे भगवता वेदव्यासेन सर्वस्यापि काव्यप्रपंचस्य कथनात् प्राचीनत्वे नास्ति संदेहः, अग्निपुराणे— "स्यादावृत्तिरनुप्रासो वर्णानां पदवाच्ययोरित्यादिना अनुप्रासादयः शब्दलकारा, एवमेव "अलंकरणमर्थानामर्थालंकार इष्यते" इत्यनेन चार्थालंकाराणां वैशिष्ट्यं प्रतिपादितम्।

अर्थालंकाररहिता विधवैव सरस्वती इत्युपक्रम्य "उपमा नाम सा यस्यामुप-मानोपमेययो। सत्ता चान्तर सामान्ययोगित्वेऽपि विवक्षितम्।"

किञ्चिदादाय सारूप्यं लोकयात्रा प्रवर्तते इत्यादिना उपमादयोऽलंकाराः लक्षिता। अग्निपुराणस्य 337 तमे अध्याये—

संक्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली।
काव्यं स्फुरदलंकारं गुणदोषविवर्जितम्॥

इत्यादिना काव्यस्यापि लक्षणमुक्तम्।

अस्मिन् दोषगुणादीनामपि निरूपणीयत्वेऽस्य शास्त्रस्य नामालंकार नामैव व्यवदेशस्य किं वीजमिति जिज्ञासायां—अलंक्रियतेऽनेनेति करणव्युत्पत्तिनिष्पन्नो

यमकोपमाबोधको नाम अलंकारशब्दः, एवं अलंकृतिरलंकार इति भावव्युत्पन्नो दोषा गुणालंकार सम्बलनकृतसौन्दर्यपरः, प्रतिपादकत्वादेवास्य शास्त्रस्याभिधानमलंकार-शास्त्रमिति विचारयितुं शक्यते। अत्र च साधकानि वामनोक्तवचनान्येव दरीदृश्यन्ते यथा—काव्यग्राह्यमलंकारात् सौन्दर्यमलंकार.। अलंकृतिरलंकारः करणव्युत्पत्या पुनरलंकार शब्दो यमकोपमादिषु वर्तते। स दोषगुणालंकारहानोपादानाम्पदम् स खलु, अलंकारो दोषहानात् गुणालंकारयोरादानाच्च संपाद्यः कवेः इत्यादिना काव्यालंकारे विवेचितम्।

एवमेव प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयादीनां षोडशपदार्थानां प्रतिपादकमपि गोतमशास्त्रं पदार्थानुमानपर्यायस्य न्यायस्य सकलविधानुग्राहकतया, सर्वकर्मानुष्ठानसाधनतया च तत्र शास्त्रे प्राधान्येन न्यायशास्त्रमिति व्यपदिश्यते, प्राधान्येन व्यवदेशाः भवन्ति मल्लग्रामवत् न्यायात्। तथैवात्रापि दोषगुणादीनाम् प्रतिपादकमपि इदं शास्त्रम्, यमकोपमादीनामलंकाराणां भूयोविषयकतया काव्य-व्यवहारप्रयोजनतया च अलंकारशास्त्रेऽपि प्रधानत्वेन तत्प्रतिपादकत्वादेवास्य नामालंकारशास्त्रमिति तर्कयामः। अलकाराणां काव्यवहारप्रयोजकत्वञ्च ध्वनि-कारेणानन्दवर्धनाचार्येण काव्यवृत्तेस्तदाश्रयादित्यनेन, मम्मटाचार्येण पञ्चमोल्लासे विस्तरेण समाहितम्। अलंकारकृतचारुत्वेनैव शब्दार्थयोः काव्यत्वव्यवहारः—

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी।
अस्या रदच्छदरसो न्यकरोतितरां सुधाम्॥

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रयोजकत्वमाकर-ग्रन्थेषु विवेचितम्।

वस्तुतस्तु अस्य शास्त्रास्यालंकारशास्त्रमिति व्यपदेशे तत्त्वमिदं विवेचनीयम्, यथा—ये दण्डिभामहमहोद्भट्टरुद्रटवामनाताः प्राञ्चोऽलंकार निक्षिप्तं मन्यमानैः 'अलंकारा एव काव्ये प्रधानम्' इति सिद्धान्तितम्। अतस्तदानीं 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन तच्छास्त्रस्यालंकारशास्त्रमिति व्यापदेशः सप्रमाणं एवासीत्। ततस्तेभ्योऽर्वाचीनैः गूढविचारशालिभिरानन्दवर्धनाचार्यैर्ध्वन्यालोकाख्यस्वप्रणीतप्रबन्धे ध्वन्यमानस्यैवार्थस्य गुणोलंकारोस्त्कारोपस्कर्तव्यत्वेन प्राधान्ये संस्थापिते, अलंकाराणां प्राधन्याभावेऽपि तत्प्रधानस्य प्राचीनव्यपदेशप्रणाल्यनुसारेणालंकारनाम्नैव व्यवदेशः प्राचलत्।

मम्मटाचार्येण स्वकीयकाव्यप्रकाशे अष्टमोल्लासे—

"ये रसस्याङ्गिनो धर्माः शौर्यादयः इवात्मनः।"

इत्यादिना विवेचनप्रसङ्गे—

टीकायाम्—"शब्दार्थौ काव्यस्य शरीरम् गुणाः रसस्य साक्षाद्।"

अलंकारास्तु शब्दार्थरूपकाव्यशरीरोत्कर्षद्वारा रसस्यैवोत्कर्षकाः, रसश्चात्मनीयः इत्यादिना समालोचितम्। सिद्धान्तितया रसः शरीरेष्वात्मवत्काव्य प्राधान्येन स्थित इति प्रागुक्तन्यायेन अस्य शास्त्रस्येदानीं रसशास्त्रमिति व्यपदेशो युक्तः, तथापि

स एव प्राक् प्रचारमुपगतो व्यवदेशोऽद्यावधि तथैव प्रचरतीतिनास्ति संदेहलेशः। तदेतप्सर्वं प्राचीनानामलंकाराचार्याणां मतमलंकारसर्वस्वे राजानकरूय्यकेण विस्तारेण विवेचितम्। एवात्र भामहोद्भटप्रभृतयश्चिरंतनालंकाराचार्या प्रतीयमानमर्थं वाच्यो अलंकारपदनिश्चितं मन्यन्ते। तथाहि—पर्यायोक्तिप्रस्तुतप्रशंसासमासोक्तिव्याजस्तुस्तुपमेयोपमानन्वयादौ वस्तुमानं गम्यमानं वाचोपकारत्वेन—

"स्वसिद्धये पराक्षेप परार्थः स्वसमर्थम्।"

इत्यादिना।

यथा योगं द्विविधया भङ्ग्या प्रतिपादितं तैः। रुद्रटेन तु भावालंकारो द्विधैवोक्तः। रूपकदीपकापह्नुतितुल्ययोगितादावुपमाद्यलंकाराः वाचोपकारकत्वमुक्ताः। उत्पेक्षा तु स्वयं प्रतीयमाना उक्ता। रसवत्प्रेयः प्रभृतौ तु रसभावादिर्वाच्यशोभाहेतुत्वेनोक्तः। तदित्थं त्रिविधमपि प्रतीयमानमलंकारतया ख्यापितमेव। आचार्यवामनेन सादृश्यनिबन्धायालक्षणाया वक्रोक्त्यलंकारत्वं ब्रवता कश्चिद् ध्वनिभेदोऽलंकारतथैवोक्तः। केवलं गुणविशिष्टा रचनात्मिकारीतिकाव्यात्मत्वेनोक्ता। उद्भटादिभिस्तु गुणालंकाराणां प्रायशः साम्यमेवसूचितम्, विषयमात्रेण भेदप्रतिपादनात्। संघटनाधर्मत्वेन चेष्टेः। तदेवं विवेचनेन समायाति यंदत्र काव्ये अलंकाराः एव प्रधानमिति प्राचां मतम्।

वक्रोक्तिजीवितकारः पुनर्वैदग्ध्यभंगीभणितिस्वाभावां बहुविधां वक्रोक्तिमेव प्राधान्यात् काव्यजीवितमुक्तवान्। व्यापारस्य प्राधान्यं च काव्यप्रतिपेदे। अभिधानप्रकार विशेषा एव चालंकाराः। सत्यपि त्रिभेदे प्रतीयमाने व्यापाररूपा भणितिरेव कविसांभागे च। उपचारवक्रताभिः समस्तो ध्वनिप्रपंचः स्वीकृतः। केवलमुक्तिवैचित्र्यजीवितं काव्यं न व्यंग्यार्थजीवितमितितदीयं दर्शनं व्यवस्थितम्। भट्टनायकेन तु, व्यंग्यव्यापारस्य प्रौढ़ोक्त्याभ्युपगतस्य काव्यांशत्व ब्रुवता व्याजावितशब्दार्थस्वरूपस्य व्यापारस्य प्राधान्यमुक्तम्। तत्राभिधाभावकत्वलक्षणद्वयोत्तीर्णोरसचर्वणात्मा भोगापरपर्यायो व्यापार प्राधान्येन विश्रान्तिस्थानतयाङ्गीकृतः।

एवं विधा नव्यप्राचीनाचार्याणां सत्यपि मतभेदे वस्तुतः काव्यस्य शोभा अलंकारैरेव जायते। विविधालंकारसज्जितायुवति यथा मनोग्राह्या जायते, एवमेव विशिष्टालंकारजातेन परिष्कृता काव्यकृतिः निश्चयेन सहृदयानां चेतः सर्वथा रसमुल्लादते। यथा उत्प्रेक्षालंकारयुक्ता कालिदासवाणी—

सैषास्थली यत्र विचिन्वता त्वां भ्रष्टं यथा नूपुरमेक
त्वच्चचरणार्विन्दविश्लेषदुःखादिव।

इदं कालिदासकथनं उत्प्रेक्षाविकासितया कियतीं शोभां धत्ते इति भावुका एव जानन्ति। एवमेव—

"मरणं प्रकृतिः शारीरिणां विकृतिर्जीवितमुच्यते बुधैः।"

इत्यदिना अलंकारपरिघुष्टेन पद्येन यत्प्रतिपादितं तथ्यं सहृदयानां तूनं मनोहारि।

## 29
## आलंकारिकाणां श्लेषालंकारवैशिष्ट्यम् ।

शब्दबुद्धिकर्मणा विरम्य व्यापाराभावन्निर्गलितोऽयं सिद्धान्तः "सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति" इति । एवञ्चानेन नियमेन एकेन शब्देनार्थद्वयप्रतीत्यसंभवात् अर्थद्वयप्रतीत्यै तत्र श्लेषस्थले एकाकारौ द्वौ शब्दावङ्गीकार्यौ भवतः । तौ च एकानुपूर्वीकत्वेऽपि तत्तदर्थनिरूपितवृत्तिभेदात् प्रत्येकं भिन्नौ "अर्थभेदेन शब्दभेदः" इति नियमात् ।

अपरम्—इन्द्रशत्रुप्रभृतीनां भिन्नसमासानां भिन्नस्वरकृतभेदोऽनिवार्यः । अत्र च तत्पुरुषबहुव्रीहिसमासौ स्तस्तेन च इन्द्रवृत्रेत्युभयोर्बोधः । एवञ्चोभयार्थबोधकावत्रापि द्वौ शब्दौ स्यातामिति "काव्यमार्गे स्वरो न गण्यते" इति च नयः स्वीकृतो वर्तते । अर्थादत्रोभयार्थबोधक एक एव शब्द इति भावः । एवञ्च भिन्नार्थबोधकौ एकाकारौ द्वौ शब्दौ यत्रैकप्रयत्नेनैकदोच्चार्यमाणतया पार्थक्येन नानुभूयेते तत्र श्लेषो भवतीति भावः । अर्थात् एकप्रयत्नोच्चार्यतयाभिन्नत्वेनानुभूयमानभिन्नार्थकनानाशब्दत्वं श्लेषत्वमिति श्लेषलक्षणं पर्यवसन्नम् । तदुक्तं काव्यप्रकाशे—'वाच्यभेदेन भिन्ना' इत्यादिना । वाच्यभेदेन भिन्नाः शब्दाः युगपद्भाषणस्पृशः—एकोच्चारणविषयाः सन्तो यद् श्लिष्यन्ति—भिन्नं स्वरूपमपह्नुवते स एव श्लेषनामा शब्दालंकार इति स्पष्टम् । 'सकृदुच्चरितं' इति न्यायानङ्गीकर्तॄणां मते तु एकोच्चारणेनैवानेकार्थसंप्रत्ययात् 'एकदा गृहीतनानातात्पर्यकः शब्द एव श्लेष' इति विवेकः ।

न च 'भद्रात्मन.', 'दुर्गालंघितविग्रहः' इत्यादिपद्येषु यथा अर्थान्तरबोधो व्यञ्जनया जायते तथैवात्रापि द्वितीयार्थस्य बोधो जायतां व्यञ्जनयैवेत्यलं स्वीकारेण श्लेषस्येति वाच्यम् ? तत्र प्रकरणादिना अभिधायानियन्त्रितत्वेनान्यार्थबोधो जायतां नाम व्यञ्जनया किन्तु प्रकृते तु प्रकरणादीनानुभयत्रार्थे तुल्यत्वनैकत्राभिधानियन्त्रणाभावादर्थद्वयस्य वाच्यत्वं नितरामपेक्षितम् । तेन श्लेषान्यथासिद्धत्वस्य वक्तुमशक्यत्वात् ।

अभिधामूलव्यञ्जनया श्लेषस्येदं पार्थक्यं यत् नानार्थक शब्देषु एकत्रार्थे तात्पर्यवशात् प्रकरणादिना अभिधा नियन्त्रिता भवेत् तत्रोक्तव्यञ्जनया बोधः अपरार्थस्य । यत्र तु क्रमेण तात्पर्यं तत्रावृत्त्या बोधः, आवृत्तिर्नाम पुनरनुसन्धानम् । यथा अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामिति । अत्रान्वयिपदार्थभेदात् बोद्धुरावृत्त्यैव बोधः, उच्चारणं तु तन्त्रेणेति भाव । यत्र तु नानार्थकशब्देषु अनेकत्र युगपत् तात्पर्यमवतरति, न वा अवतरति तत्र श्लेष इति त्रयाणां विषयविभागः । नानार्थकशब्देषु यत्रानेकत्र प्रकरणादिकं युगपदवतरति तत्रैव श्लेष इति तु वक्तुमप्यशक्यम्, अनेकत्रप्रकरणाद्यभावेऽपि योऽसकृत्परगोत्राणामित्यादौ श्लेषस्य स्वीकरिष्माणत्वात् । प्रकरणाद्यभावेऽपि द्वावप्यर्थौ वाच्याविति तत्वृत्तिग्रन्थविरोधाच्च ।

इदमत्रावधेयम्—श्लेषस्तावत् द्विविधः सभङ्गोऽभङ्गश्च। सभङ्गो नाम यत्र विभिन्नसमासद्वारा पदानि विभज्यान्यार्थः क्रियते। यत्र च पदविभागमन्तरैवार्थद्वयस्य प्रतीतिस्तत्राभङ्गश्लेषः। अत्र केचन एवं ब्रुवते—सभङ्गश्लेष एव शब्दश्लेषः, अभङ्गः श्लेषस्तु अर्थश्लेषः—तेषामिदमत्रा तम्—यत्र विभिन्न समासो भवति, तत्र समासानुसार-मुदात्तादिस्वरभेदान् भिन्नेन कण्ठताल्वाद्यभिघातरूपप्रयत्नेनोच्चार्यमाणत्वात् शब्दयो-र्वैभिन्नमापतितं भवति। तेन च श्लेषभङ्ग एवापद्यत इति स्वरभेदमनादृत्यैकप्रयत्नो-च्चार्यत्वात् जतुकाष्ठन्यायेन परस्परं संश्लिष्टयोः शब्दयोः श्लेष एव सभङ्ग शब्दश्लेषः। अयं सभङ्गश्लेषः शब्दविषयत्वात् शब्दश्लेष एव। यत्र तु समासाभेदेन तदभावेन वा स्वरितादिस्वराभेदस्तत्राभिन्नप्रयत्नोच्चारणनैकस्मादेव शब्दात् अर्थद्वयं प्रतीयते। तत्र एकवृन्तगतफलद्वयन्यायेन वस्तुतोऽर्थयोरेवश्लेषः। एवं च स्पष्टमेव शक्यते वक्तुं यदर्थ-श्लेषोऽभङ्गश्लेषः। अनयोः क्रमशः वर्तते उदाहरणद्वयम्—

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम्॥
योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः।
शतकोटिदतां विभ्रद्विबुधेन्द्रः स राजति॥

अत्र पूर्वश्लोके पृथूनि कार्तस्वरस्य पात्राणि यत्र तत्। तथा पृथुकानामार्त-स्वरस्य पात्रमित्यादिरूपेण सभङ्गश्लेद्वारा राजकव्योः समानता संगता भवति। उत्तरत्र तु भङ्गमन्तरापि पदानां राजेन्द्रयोरुभयोः बोधोऽनायासेनैव जायते इति अभङ्ग-श्लेषोऽर्थविषयक एव।

अथवा सभङ्गेऽभंगे वा उभयत्रार्थद्वयप्रतीतावेव श्लेषालंकार प्रतीतिरिति द्वयोरप्यर्थावलंकारत्वेवाङ्गीक्रियताम्। अलमत्र शब्दालंकारत्वस्वीकृत्या। अलंकार्या-लंकरणभावस्याधारशिला तु आश्रयाश्रयिभाव एव लोकतः सिद्ध्यति। यत्र धार्यते कटककुण्डलाद्याभरणं सोऽलंकार्यः, कटकादयश्चालंकारास्तथैव प्रकृतेऽपि यो यदाश्रितः स तदलंकार एव।

अन्यदिदमत्रावधारणीयम् - श्लेषस्थलयस्य कस्याप्यलंकारस्यावश्यं प्राप्त्या निरवकाशः श्लेषः सर्वालंकारबाधकः। अलंकारान्तराणि श्लेषाभावस्थले चरितार्थानि सन्ति। अतस्तेषां बाध्यत्वमेव युक्तमिति श्लेषस्थले अलकारान्तराणां केवलं प्रतिभास एव भवति न तु तेषां पर्याप्तिरपि तत्र।

उपर्युक्तविवेचनेन तथ्यत्रयं पुरस्तादागतम्। तत्र प्रथमं तावत्—अभङ्गश्लेष-स्यार्थालंकारत्वम्, द्वितीयम् उभयरूपः श्लेषोऽर्थालंकार एव, तृतीयन्तुश्लेषः उपमाद्य-लंकारबाधकः। एतत् त्रयं तथ्यं यथाक्रमं विविच्यते-शब्दार्थयोर्मध्ये यस्मिन् सति ये दोषगुणालंकारा सन्ति, असति न च सन्ति, ते तदधीनस्वरूपतया तदीया इति सिद्धान्तः। तच्छब्दसत्वे योऽलंकारः स्यात् तच्छब्दाभावे च न स्यात् स एव शब्दा-लंकारः। तच्छब्दपरिवर्तनेऽपि तदर्थकशब्दान्तरे समागतेयोऽलंकार प्रतीयते सोऽर्था-लंकार इति साधीयान् पक्षः। अर्थात् पर्यायपरिवृत्तसहत्वासहत्वमेवालंकाराणां

शब्दार्थगतत्वव्यवस्थापक्रम् । यथा—कष्टत्वश्रुतिकटुत्वादयो दोषाः ओजोगाढ़त्वादयश्च-गुणाः अनुप्रासदयश्चालंकारास्तच्छब्दे सति भवन्ति, असति च नेति शब्दगता एवोच्यन्ते इमे । यथा च अपुष्टत्यादयो दोषाः प्रौढ्यादयो गुणाः उपमादयश्चालंकारास्तास्मिन्नर्थे च सति भवन्ति, असत्यर्थे तस्मिश्च नेति अर्थगता उच्यन्ते इमे । एवमेव 'पृथुकार्तस्वरपात्रम्' योऽमक्रत्परगोत्राणामिति सभङ्गाभङ्गश्लेषयोः तत्तच्छब्दसत्त्वे एव श्लेषप्रतीतिरिति स्थलद्वयेऽपि शब्दश्लेष एव न तु अभङ्गस्थलेऽर्थश्लेष इति भवितव्यम् । न चान्वयव्यतिरेकवत् शब्दभेदाभेदाभ्यामनि श्लेषस्य शब्दार्थगतत्वं व्यवस्थाप्यताम् । यत्र तु जतुकाष्ठन्यायेन शब्दद्वयं तत्र शब्दश्लेषः । यत्र च एकवृन्तगतफलद्वयन्यायस्तत्र शब्दाभिन्नतया अर्थश्लेष इति वाच्यम् ? अर्थभेदेन शब्दभेद इति नियमस्य जागरूकत्वेन 'योऽसकृत्परगोत्राणामित्यत्रशब्दाभेदस्य वक्तुमशक्यत्वात्' । न च 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इति प्रामाण्येन अर्थभेदेऽपि न शब्दभेद इत्यभंगश्लेषोऽर्थालंकार एवेति वाच्यम् ? अभङ्गो भवेत् सभङ्गो वा उभयत्रापि शब्दस्यैव प्राधान्यादर्थद्वय प्रतीयते अतः कविप्रतिभयोट्टङ्कित्वेन वैचित्र्यबोधोपायत्वेन चोभावपि शब्दालंकारावेवेति वक्तुं निर्बाधत्वात् ।

अभङ्गश्लेषस्थले निरर्थकवर्णप्रयोगात् केवलमर्थानुसन्धानसापेक्षत्वमस्ति, न तथा सभङ्गस्थले इति अननैव भेदेनाभङ्गश्लेषोऽर्थालंकार इति कथनमप्यसाम्प्रतम् । तथा सति रसपरत्वेनार्थमुखप्रेक्षितयाऽनुप्रासस्याप्यर्थालंकारत्वापत्ते ।

न चैवम्—अर्थश्लेषो निर्विषय एव स्यायदित्युच्यते—यत्र शब्दपरिवर्तनेऽपि अर्थद्वयप्रतीतिर्जायिते तत्रैवार्थश्लेषः । यथा -- 'स्तोकेनोन्नतिमायाति' इत्यत्र यदि अल्पेनोन्नतिमायाति इत्युच्चयते तावताप्यर्थद्वयं प्रतीयत एवेति एतादृशस्थले एवार्थश्लेषो न तु अभङ्गस्थले इति विचक्षणाः ।

यदप्युच्यते—'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ।' इति समासोक्तौ, पर्यायोक्ते अप्रस्तुतप्रशंसायां च द्वितीयार्थप्रतीतिर्जायिते । सा च प्रतीतिर्व्यञ्जनया जायते । श्लेषे चार्थद्वयस्य प्रतीतिरभिधयैव जायत इति उक्तेष्वलंकारस्थलेषु श्लेषस्याप्रसंगः प्राप्नोति । एवमेव—

"विद्वन्मानमहंसवैरिकमलासंकोचदीप्तद्युते ।"

इत्यादि पद्ये विदुषां चित्ते हंसस्य संचरणासंभवात् हंसेन सह मानसस्य सम्बन्धोपपत्तये चित्ते सरोवराद्यारोप आवश्यकः । अयमारोप एव रूपकम् । अत्रैव वाक्यार्थस्य विश्रान्तिरर्पीतिश्लेषस्यात्र मनोमानसयो केवलं प्रतीतिं कृत्वा प्रतिभासमात्रम् । श्लेषे उभयार्थस्य समानरूपेण वाच्यत्वमभिप्रेतमत्र तु एकस्यैव प्राधान्यमित्यत्रापि श्लेषस्य न प्राप्तिः । एवं चैतादृशस्थलेषु श्लेषस्यान्यालंकारैर्बाध्यत्वेऽपि 'येन ध्वमस्तमनोभावेन बलिजित्कायः पुरास्त्रीकृतः' इत्यत्र तुल्ययोगितायां 'प्राकरणिकाप्राकरणिकयोरेकत्र सम्बन्धरूपे दीपके' तथा 'सकलकलं पुरमेतज्जातं सम्प्रति चन्द्रबिम्बमिव ।' इत्यादौ श्लेषेणोपर्युक्ता अलंकारा बाध्यन्ते । तेषां हि अन्यत्र चरितार्थत्वमस्ति, श्लेषस्य चैतद्विषयपरिहारेणासंभवाद् वैयर्थ्यापाताञ्च । अत्रोच्यते

श्लेषस्यालंकारान्तरविविक्तविषयत्वमिति बाध्यबाधकभावस्यात्र वक्तुमशक्यत्वम् । 'येनध्वस्तमनोभवनेत्यादौ शिवविष्णुरूपयोरुभयोरप्यर्थयोःवाच्यत्वेनात्र तुल्ययोगितायाः प्राप्त्यभाव श्लेषस्य चात्र चारितार्थ्यं स्पष्टमेव' । किञ्च-तुल्ययोगितायामनेकधार्मिणामनेकधर्मसम्बन्धो नियत. । येन ध्वस्तेति पद्ये तु विभिन्नधर्मिणो विभिन्नधर्मेऽन्वयेन च तुल्ययोगितायाश्चात्र प्राप्तिरेव नेति निर्बाधमत्र चरितार्थस्य नालंकारान्तरप्रतिभासमात्रापादकत्वम् ।

इदमत्र विचार्यते—'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव ।' इत्यत्र तथा--'कमलमिव मुखं मनोज्ञम्' इत्यत्र च कोऽलंकारः ? अत्र केचित् सकलकलमित्यत्र शब्दपरिवृत्त्यसहत्वात् शब्दश्लेष । उत्तरत्र तु कमलमिव मुखं मनोरममित्युपात्तेऽपि-पि उभयत्राप्यन्वयस्य संभवादर्थश्लेष । अर्थश्लेषेएव गुणक्रिययोः साम्यं भवितुमर्हति इति अत्रोपमायाः प्राप्तिः ।

सकलकलमित्यत्र तु केवलं शब्दसाम्यमादायैव प्राप्तोपमेति वास्तविकसाम्यस्थले अर्थश्लेष एवोपमा न तु शब्दसाम्येऽपीति 'सकलकलमित्यत्रोपमाप्रतिभासहेतुः श्लेषः' इति वदन्ति । परं नैतद् युक्तं यतो हि—गुणक्रिययोः साम्यमेव उपमा प्रयोजकं भवति इत्यत्र मानाभावः । अन्यथा 'विद्वन्मानसहंस' इत्यत्रोपानसरोवरस्योपमेयचित्तेन सहाभेद प्रतीतौ राजनि जायमानं हंसत्वारोपरूपं परम्परितरूपकमपि न स्यात् ।

वस्तुतस्तु साधर्म्यमात्रमेवोपमाप्रयोजकम् । 'येनध्वस्तमनोभवेन' इत्यादि पद्ये देवत्वमेव देवत्वमेव पातालमित्यादि पद्ये च द्वयोरप्यर्थयोर्वाच्यत्वेन श्लेषः सावकाश इति नासौ कस्याप्यलंकारस्य बाधकः । यत्र तु श्लेषोपमयोरेकत्र संस्थितिस्तत्र संकरालकार एवेत्यलम् ।

## 30

## शब्दार्थोभयरूपकाव्यम् ।

अथवा

## निर्दुष्टं काव्यलक्षणम् ।                    (1986)

अथवा

## रामायणं नाम परं तु काव्यम् ।                    (1985)

असारमिदं जगत् प्रतिपदमायासयति प्राणिनः दर्शयति अनिष्टम्, जनयति चोद्वेगमित्याकलय्य महीयांसः कवयो लोकोत्तरानन्दसन्देहजनकतया चतुर्वर्गफलप्राप्तये काव्यात्मिकां सारस्वतीं सृष्टिमरीरचन् । अत एव प्रभुसम्मितवेदादिशास्त्रेभ्यः सखिसम्मितपुराणेतिहासभ्येश्च विलक्षणा सत्कविभणितिः मधुरमभिदधती मञ्जुभाषिणी कामिनीव प्रवणयति मानवमनांसि शुभैकनिदानेष्वभ्युपायेषु । अत एवोक्तम्—

चतुर्वर्गफलप्राप्तिः सुखादल्पधियामति ।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ।।

काव्यं नाम कवेः कर्म । कविश्च कान्तद्रष्टा भवति । स हि न केवलं संकुचितं परिमितं वा अर्थजातं पश्यति, न वा केवलो मनुष्योऽहमिति कृत्वा मानवीयान् भावान् एव साक्षात्करोति, अपि तु तस्यकृते विश्वेषां निर्मुक्ता विस्तृता च स्थली वर्तते । स सरित्प्रवाहे मधुरं गानं शृणोति क्वचिच्च आकर्णयति वयसां विरावे वनदेवतानां सन्देशम्, प्रकाशयति चापरत्र प्राच्यां चन्द्रोदये वनितासुखसम्भोगम्, ख्यापयति चान्यत्र नायिकामुखकमलमकलंकचन्द्रमसा तुल्यम् । दैशिककालिकपरिधयस्तं परिवेष्टुं समर्थाः न भवन्ति । स कालातीतां रचयति देशातीतां दर्शयति, परोक्षं प्रत्यक्षयति, भूतं भावयति, जडं चेतनयति, ब्रह्मणमपि विरचय्यापूर्वमपारं काव्यसंसारम् । एतत् सर्वं विमृश्यैव मम्मटाचार्यः काव्यप्रकाशे ब्रह्मणः सृष्टेरपेक्षया काव्यसृष्टेर्महनीयतामुदचीचरत् । ब्रह्मणः सृष्टिः षड्रसांपेता क्वचित् हृद्यापि भवति क्वचिदायासकरी, न चेयं कविसृष्टिस्तया ।

इयं हि नवरसोपेता सर्वदा सर्वान् ह्लादयति, नैराश्यनीहारं निरस्यति, उत्साहं समेधयति, लौकिकं जनं सुखयति, सहृदयं चमत्करोति मुमुक्षं मोचयति, अलमनल्पजल्पनया कविभारतीयमघटितमति घटयन्ति निखिलं प्रसाधयति ।

यद्यपि निखिलं जगत् विम्बरूपतया काव्यक्षेत्रं तथापि विश्वस्य निखिलं वस्तु न भवति काव्योपादानम् । काव्यगुम्फने तु तादृशस्योपादानस्यावश्यकता वर्तते यत् क्षोदीयसीं भावनां परिसमाध्य समुत्थाप्य च क्षुद्रधरातलात् जीवनतलं ज्ञानस्य सौन्दर्यस्य च नभस्तलमारोहयेत् । प्रदर्शयेच्च सत्यं शिवं सुन्दरमित्यस्य दिव्यं पन्थानम् । शिवतत्त्वमेव काव्यस्य परोपनिषद् ।

कविः विश्वेषां जनानां प्रतिनिधिः, तस्यविचाराः भवन्ति समेषां विचाराः । अत एव कवेरनुभूतिलेलितपदकदम्बकरूपमाकलय्य, स्वानुभूतिरिव सहृदयहृदयं प्रविश्य, आनन्दयति, रमयति, मदयति, मोह्यति च यथावसरम् । अत एवोक्तमभियुक्तैः—

सरस्वती स्वादु तदर्थवस्तु,
निःष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति,
परिस्फुरन्तं प्रतिभाविशेषम् ।।

लोकोत्तरवर्णनानिपुणः कविः रसैकतानपरायणः विशिष्टामेव रचनां रचयति । तत्र न रागस्य स्थानम्, न वा द्वेषस्योज्जम्मणम्, न च कलहस्य वावकाशः । अत एव तदीया रचना जीवन्तीभूयसे कालायसुस्थिरेवावतिष्ठते । शारीरिकबुभुक्षादिशमनायान्नाद्याहारस्येव मानसिकश्रमापकरणपुरःसरम् अपूर्वमानन्दमुत्पादयितुमेव सारस्वतसृष्टेरवतारः । तत्रापि यदि रागद्वेषकलहादयः समुज्जृम्भेरन् तर्हि को नाम भेदस्तस्य प्रायःजनेभ्यो विलक्षणरचनापरायणस्य कवेः ? अत एवेदानीं वर्षाकालिकमण्डूका

इव प्रत्यहं निर्मीयमानान्यपि भूयांसि काव्यानि रागद्वेषपारस्परिकेर्ष्याज्वरग्रस्तानि नाववलोक्यन्ते विदग्धैः, अपितु उपहस्यन्ते सर्वैः, विलीयन्ते चाचिरादेव ।

यदप्युच्यते—कालिदासीयादिकाव्येषु वर्णितं केवलं विलासमयं जीवनं, दर्शितः यौवनस्योद्दामो विलासः, उपदर्शितः क्वचित् वासन्तिकमदमत्तकषायकलकंठीकलरवः, क्वचिच्च तारतरमुच्चरतां वयसां विरावः, अपरत्र मायूरः केकारवः । परञ्च न खलु विचित्रं क्वचिदपि शैत्यवशात् कटकटायमानदन्तानां हीनानां दीनानाञ्च इतिवृत्तमपि । सेयं प्राचीनकाव्येषु असह्या न्यूनता शिरः शूलायते ।

परमेतत् सर्वमविचारितरमणीयम्—यतो हि—इदानीन्तनविषयपरिस्थितिपरिकान्तानां पित्तोपहतचक्षुषां तदानीन्तने स्वर्णयुगेऽपि दीनतायाः दरिद्रतायाश्च दिदृक्षाया ईर्ष्यामूलकत्वेनोपेक्ष्यमाणत्वात् । यदि स्यादपि कथञ्चिदणुमात्रं क्वचित् तादृशमनभीष्टं तथ्यं तदानीं तदा गुणसन्निपाते निमज्जमानस्य स्वल्पदोषस्येवोपेक्षणीयमेव तन्महाकवीनाम् ।

किञ्च काव्यं सप्रयोजनं साधयितुकामेन प्रवृत्तिमता कविना ऐतिहासिकं चित्रणं न खल्वभीष्टाय कल्पते । तथा चित्रणपरायणे तु तस्यात्मपदवाच्यत्वमपि न सिद्ध्येत् । 'रसो वै सः', 'रसं ह्येवायं लब्ध्वा आनन्दी भवति' इत्यादि श्रुत्या आनन्दस्य ब्रह्मरूपतया सच्चिदानन्दस्वरूपस्य ब्रह्मणः आनन्दांशस्यैव विवर्तमिदं जगदिति कृत्वा तदुद्बोधनायैव महाकवेः प्रवृत्तिः एतदेव नूनं सत्य चित्स्वरूपममृतञ्च स्वीयया समुज्ज्वलया प्रभया देदीप्यमानमपि अज्ञानावरणेनाच्छन्नमुद्बोधकाभावात् तिरोहितं सदपेक्षते चिद्गतावरणभंगं, तदाकाराकारितामन्तःकरणवृत्तिं वा । अत एव समुचितललितसन्निवेशचारुणा काव्येन समर्पितैः पुनः पुनरनुसन्धानात्मिकतया भावनया अलौकिकत्वमुपगतैः विभावादिभिः सम्भूय प्राद‍ुर्भावितेन व्यञ्जनाव्यापारेणापाकृते आनन्दांशावरणे अज्ञाने भग्नावरणचिद्विशिष्टः स्थायी विगलितवेद्यान्तरसम्पर्कः सन् उपभुज्यतेकैश्चित्पुण्यवद्भिः । तदुक्तम्—

पुण्यवन्तः प्रमिण्वन्ति योगविद् रससन्ततिम् ।

अयमेव च काव्यस्य मेरुदण्डः । एवमापादयतः काव्यस्य भवति हृद्यता, उपादेयता, सार्वजनीनता चेति मनाक् मुकुलितलोचनैर्विभावनीयम् ।

लोकोत्तरवर्णनानिपुणकवेः कर्मकाव्यम्, इति स्थिते काव्यत्वं शब्दपर्याप्तं, अर्थपर्याप्तं, तदुभयपर्याप्तं वेति भवति विचिकित्सा । वर्णनञ्च भवितुमर्हति अर्थस्य । न चार्थः कवेः कर्म । न हि केनापि कविना कोऽप्यर्थः समुत्पाद्यते । अतः कविकर्मता केवलं शब्दनिष्ठैव । सा चेयं कविकर्मता केवलं गुम्फनामिल्कैव न तु उत्पाद्यस्वरूपा, शब्दानां नित्यत्वेन कव्युत्पाद्यतायास्तत्र वक्तुमशक्यत्वात् । अत एवं काव्यं लक्षयति अग्निपुराणे—

"संक्षेपात् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ।"

इति प्राथमिकं काव्यलक्षणमुपलभ्यते । पदावली च शब्दासमूहात्मिकेति तत्र कविकर्मता वक्तुं सुशका । अयमेव शब्दपर्याप्तकाव्यतावादः आचार्यदण्डिनाऽपि स्वीकृतः । तेनोक्तम्—

"शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ।"

अत्र च काव्यलक्षणद्वये निभालितं केवलं काव्यस्य बाह्याङ्गतत्त्वं दोषगुणालंकारादिकं न च मनागपि स्पृष्टं काव्यस्य जीवनाधायकं तत्त्वम् । अत स्थूलदृशाविचारमपहाय शब्दनिष्ठकाव्यतावादी दर्पणकारो विश्वनाथः सूक्ष्मेक्षिकया ध्वनिकारादिभिः निर्धारिते वस्त्वलंकाररसरूपे विविधे ध्वनौ काव्यात्मतत्त्वे तन्मध्यतः रसध्वनिमेव काव्यात्मत्वेनाङ्गीकृत्य—"वाक्यं रसात्मकं काव्यमिति लक्षणयाञ्चकार ।" परन्तु विश्वनाथस्य शब्दमात्रे काव्यता स्वीकरणं पुनः तदीयया "काव्यं द्विविधं दृश्यं-श्रव्यञ्चेति" स्वकीयोक्त्या एव विप्रतिसिद्धमिति चिन्तनीयमेवास्ते ।

शब्दमात्रकाव्यतावादिषु पण्डितराजजगन्नाथस्य प्रमुखं स्थानम् । अनेन हि महता संरम्भेण साधितः शब्दकाव्यतावादः । तथा हि यदि काव्यत्वं शब्दार्थयोः व्यासक्तं स्यात् तदा अवयवस्थ समुदायातिरिक्तत्वेन प्रत्येकवृत्तिधर्मावच्छिन्नानुपयोगिताकसमुदायत्वावच्छिन्न प्रतियोगिताकभेदस्याङ्गीकर्तव्यतया 'घटो न घटपटौ' इति यथा व्यवहारः तथैव श्लोकवाक्यं न काव्यमिति व्यवहारोऽप्यापद्येत काव्यत्वस्य श्लोकवाक्यात्मकशब्दमात्रे पर्याप्तेरभावेन श्लोकत्वावच्छिन्नानुयोगिताक—शब्दार्थोभयत्वावच्छिन्नप्रतियोगिताकभेदस्य सुस्पष्टं वक्तव्यतया तथा वक्तुं शक्यत्वात् । यदि च काव्यं शब्दमात्रपर्याप्त स्वीक्रियते तदा "श्लोकवाक्यं न काव्यमिति व्यवहारो नैवजायते ।" यतो हि तथा सति अनुयोगितावच्छैकञ्चैक शब्दत्वमेवेति 'घटो न घटः' इति व्यवहारो यथा न भवति तथैवोपर्युक्तो व्यवहारोऽप्यशक्य एव ।

अत्रब्रूमः—यथाशब्द कविकर्म तथा अर्थोऽपि कविकर्म वर्तत एव । स्वतः सम्भविनोऽर्थाः कविसमवेतरसबोधोपयिकसामग्रीविषयक ज्ञानकर्मत्वाक्रान्ताः सन्ति एव । आह्लादोत्पादकमर्थं मनसि पूर्वं निश्चित्यैव काव्यकरणे जायते प्रवृतिः महाकवीनाम् । एतदरिक्तं भवन्ति केचन तादृशाः अर्थाः ये न खलु लोकप्रसिद्धिमुपगतास्तथापि कविकल्पनाप्रसूताः विच्छित्तिविशेषजनकाः कविप्रौढोक्तिसिद्धपदेन व्यवह्रियन्ते । एवञ्चार्थेष्वपि कविकर्मता स्पष्टमेव प्रतिभाति ।

तस्मात् कविकर्मत्वेन शब्दार्थयोः उभयोः काव्यत्वे न काचित् विप्रतिपत्तिः । अत एव 'काव्य श्रुतम्', 'काव्यं पठितम्' इत्यादिव्यवहारवत् 'काव्यं बुद्धमिति' अर्थस्य काव्यत्वविषयकोऽपि व्यवहारो दृश्यते लोके । न च काव्यत्वस्योभयपर्याप्तत्वे श्लोकवाक्यं न काव्यमिति व्यवहारापत्तिस्तदवस्थैवेति वाच्यम् ? काव्यत्वस्योभयनिष्ठत्वेऽपि लक्षणाया अन्यतरस्मिन् अपि काव्यपदप्रयोगस्य कर्तुं शक्यतया तादृशापत्तेर्वारणात् । अत एव वेदत्वस्य शब्दार्थोभयनिष्ठत्वेऽपि 'ऋचः पठति' इति शब्दमात्रे भाक्तः प्रयोगः संगच्छते ।

वस्तुतस्तु शब्दमन्तरा अर्थस्य अर्थमन्तरा शब्दस्य चावस्थानाभावेन तयोस्तादात्म्यं वर्तते। तादात्म्यञ्च तद्भिन्नत्वेऽपि तद्भेदेन प्रतीयमानत्वम्। अत एव अर्थे शब्दधर्मत्वव्यवहारो जायते यत् "पदं श्रुतम् अर्थार्थं शृणु" अत्र अर्थे श्रावणप्रत्यक्षविषयत्वरूपः शब्दधर्मः प्रयुक्तो वर्तते। एवञ्च शब्दार्थयोरुभयोः काव्यत्वस्वीकारे न प्रतिभाति कश्चन प्रत्यवायः। पण्डितराजेन शब्दमात्रे काव्यतां स्वीकुर्वताऽपि तत्र रमणीयार्थस्य सत्ता स्वीकृतैव। यदि तदभिमते शब्दात्मके काव्ये रमणीयार्थप्रतिपादकता न स्यात् तदा तस्य काव्यत्वमेव व्याहतं स्यात्। अतः काव्यत्वमुभयपर्याप्तमेव।

शब्दार्थयोः काव्यत्वस्वीकारादेव अर्थदोषगुणालंकाराणाम् अर्थमूलशक्तिमूलकध्वनीनाञ्च निरूपणं संगतं भवति। शब्दमात्रस्य काव्यत्वे तु तद्गतानामेव दोषगुणालंकाराणां विवेचनस्यौचित्येन भूयसामर्थगतानां दोषगुणादीनां विवेचनस्योन्मत्तप्रलापत्वापत्तिः स्यात्। अतः रसप्रतीतिविधायक दोषरहितौ माधुर्यादिगुणसम्पृक्तौ सालंकारौ क्वचिन्निरलंकारावपि शब्दार्थौ काव्यम्। तस्य जीवातुभूत तत्त्वं ध्वनिः। स च यद्यपि वस्त्वलंकाररसरूपस्त्रिविधः, तथापि वस्त्वलंकारयोः वाच्यसहिष्णुव्यंग्येऽपि रसरूपो ध्वनिः सर्वथा वाच्यातिसहिष्णुरिति तस्यैव प्रामुख्यं विलसति काव्यक्षेत्रे। अत एवोक्तम्—

दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात्।
सर्वे नवा इवाभान्ति मधुमासे द्रुमा इव॥

तस्य च व्यञ्जकता क्वचित् शब्दे क्वचिच्चार्थेऽवतिष्ठते। यत्र शब्दस्य व्यञ्जकता तत्रार्थस्य सहकारिता, यत्र चार्थस्य व्यञ्जकता शब्दस्य सहकारिता भवति। एवं रीत्या रसप्रधानं काव्यमेवात्रोपादेयम्। तदेव च कृत्ये प्रवर्तयति, निवर्तयति चाशुभात्, प्रेरयति विश्वमानसं प्रेयसि, दर्शयसि च श्रेयः। अतस्तदेव साध्यं, साधितं वा स्यात् यथा तथा यतनीयम्।

## 31
## उपमा कालिदासस्य।

कस्यचित् समीक्षकस्येयमुक्तिः प्रसरति लोके पुष्पेषु जातिः, नगरीषु काञ्ची, काव्येषु माघः, कवि कालिदासः। अस्या अयमाशयः यत् पुष्पेषु मध्ये जातिपुष्पं मसृणताकोमलतामनोमोहकतालोकोत्तरसुरभिताप्रभृतिभिर्गुणैः निखिलपुष्पातिशायि। एवमेव सप्तपुरीषु मध्ये काञ्चीपुरी अनुत्तमा। काव्येषु माघकविकृतं शिशुपालवधाख्यं काव्यं सर्वश्रेष्ठम्। कविषु कालिदासः अखिलेतरकविमूर्धन्यः। अस्या उक्तेः प्रतिपदविवेचनं परित्यज्य 'कविकालिदासः' इत्यत्र किञ्चिदुच्यते—

कविर्हि नाम यः काव्यं करोति।

काव्यं च चमत्कारसारं भवति । अत एवोक्तं त्रिविक्रमभट्टेन—

किं कवेस्तेन काव्येन किं काण्डेन धनुष्यतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥

स चायं चमत्कारः कविकल्पनारञ्जितया वाग्मितया सम्पाद्यते सहृदयहृदयाह्लादकरः । वाग्मिता हि नाम मितस्य सारिष्ठस्य च वचसः प्रयोगः । तदुक्तं कवितार्तिकचक्रवर्तिना श्रीहर्षेण नैषधे 'मितं च सारं च वचो हि वाग्मिता' । कल्पनाकुशलः कविः स्ववाग्मितया वर्ण्यस्य लोकोत्तरं मनमोहकं मूर्तरूपमुपस्थापयति । अस्माकं कविकुलकुमुदकलाधरः श्रीकालीदासः अत्र प्रथमः ।

प्रस्वापनास्त्रप्रयोगेण निद्राविद्रावितचैतन्यान् सैनिकान् वर्णयन् कविः कथयति—

ततो धनुष्कर्षणमूढहस्तमेकांसपर्यस्तशिरस्त्रजालम् ।
तस्थौ ध्वजस्तम्भविषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ॥

अत्र हि निद्राविधेयिनां सैनिकानां कल्पनाकल्माषीकृतं तादृशं मनोरञ्जकं रूपमुपस्थापित कविना येन सहृदयास्तुष्यन्ति प्रशंसन्ति च कविकौशलम् । यथा च—

स दक्षिणापाङ्गनिविष्टमुष्टिं,
नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं,
प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥

अत्र हि शिवं लक्ष्यीकृत्य स्थितस्यात्मयोनेः कल्पनाकौशलसंसृष्टं मनोरमं मूर्तं रूपमुपस्थापितं कविना ।

अत्रोभयत्रापि पद्यपठनतदर्थानुशीलनसमकालमेव वर्ण्यं मूर्तरूपेणोपष्ठिते उद्भावयति च हृदये परमानन्दसन्दोहं यत् काव्यप्रयोजनेषु प्रधानतमम्, तदुक्तं मम्मटभट्टैः काव्यप्रकाशे 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये सद्यः परनिर्वृतये ।

कविर्हि अलंकारलङ्कर्मीणो भवति । अलङ्काराणां सुप्रयोगं कृत्वा काव्यसौन्दर्यस्याभिवृद्धिं करोति । अलङ्काराश्चैते द्विविधाः शाब्दा आर्थाश्च । तत्रास्माकं कविः शब्दालङ्कारेषु अनुप्रासप्रियः । उचितं चैतत् यतो रसाद्यनुकूलः प्रकृष्टो वर्णानां न्यासो ह्यनुप्रासः कविश्चायं रसकविः । अनुप्रासभासा विभूषिता धीरगम्भीरगत्या प्रसरन्ती सरस्वती श्रवणसुभगा सती चेतोहरा भवति । यथा—

ततो मृगेन्द्रस्य मृगेन्द्रगामी,
वधाय वध्यस्य शरं शरण्यः ।
जाताभिषङ्गो नृपतिर्निषङ्गा-
दुद्धर्तुमैच्छत् प्रसभोद्धृतारिः ॥

अर्थालङ्कारेषु उपमा प्रमुखा । सा हि प्रभूतालङ्कारमूलभूता । कविश्चायमुपमायां सिद्धहस्तस्तत एवेयं प्रसिद्धिः 'उपमा कालिदासस्य' । कवेर्हि उपमा रमणीयाः समञ्जसा अर्थाभिव्यक्तिक्षमाश्च भवन्ति । अतएवायं कविरुपमायां सर्वानन्यान् कवीन्

अतिशेते । तत्र सामञ्जस्यं नाम औचित्यम्, तच्चोपमानोपमेययोरुपमानयोश्चापेक्ष्यते । तत एवार्थाभिव्यक्तिक्षमा भवत्युपमा ।

मेघे विरहानलसन्तप्तां यक्षपत्नीं वर्णयन् कविः कथयति—

गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां ।
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ।।

अत्र कविना सुललिताङ्गी रूपयौवनसम्पन्ना विरहानलोन्मथिता यक्षपत्नी तादृश्या ललितया सुकोमलया रूपयौवनसम्पन्नया शिशिरोन्मथितया पद्मिन्या उपमिता इत्यन्तं सामञ्जस्यमत्रोपमानोपमेययोः प्रतिभाति । तेन चोपमानुशीलनसमकालमेव विरहानलसन्तप्ता क्लान्तचित्ता शीर्णमूर्तिः प्रशिथिलशरीरा सुन्दरी नेत्रयोः पुर उपतिष्ठते । अत्र चानयोपमया विरहिण्यालालित्यं कोमलत्वं विरहितापस्योग्रता तत्सहनाक्षमताप्रभृतयोऽर्था अभिव्यक्ता भवन्ति । यथा च—

साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि ।
प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ।।

अयमाशयः यदादौ तावन्मत्कुशलसन्देशैः मत्पत्नीं समाश्वास्य तदनुतत्प्रहिताभिज्ञानेन सन्देशेन च ममापि प्रातःकुन्दप्रसवशिथिलं जीवितं धारयेथाः । अत्र हि उपमानोपमेययोर्मधुरं सामञ्जस्यं काव्ये सौन्दर्यमावहन् विरहध्वस्तजीवनस्यास्थिरतां सन्देशस्याभिज्ञानस्य च तत्स्थिरतापादने परमोपयोगितां चाभिव्यनक्ति । यथा च—

ऋषिकुमाराभ्यां गौतम्या च सह शकुन्तला राजसभायां राज्ञो दुष्यन्तस्य पुर उपस्थिता । तां दृष्टवा शापव्यवहितमतिर्नृपतिश्चिन्तयति—

केयमवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ।।

अत्र हि कविना तापसैः परिवृता शकुन्तला पाण्डुपत्रैर्वृतेन नवपल्लवेनोपमिता । एवं चोपमानोपमेययो रमणीयं सामञ्जस्यं प्रतिपादितं भवति । अपि चानेनोपमानेन तापसानां शरीरस्य मानसस्य च रुक्षता, शकुन्तलाया यौवनजनितरूपलावण्योत्कर्षस्याकर्षकता चाभिव्यक्ता भवति ।

उपमानस्योपमाप्रदातुश्च सामञ्जस्यम् ।

अस्यायमाशयः यदुपमात्रा प्रदत्तया उपमया देशकालानुरूपया उपमातुः स्तरानुरूपया च भाव्यम् । तत्र देशकालानुरूपतायाम्—

सन्तानकामनया राजा दिलीपः गुरोर्वसिष्ठस्याश्रमं प्राप । अथ च सायन्तनस्य विधेरन्ते तौ ददर्श । अत्र कविः कथयति—

विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ।।

अत्र हविर्भुक् (यज्ञाग्निः) स्वाहा चोपमानौ सर्वथा उपमेययोरनुरूपौ देशकालानुरूपौ च । अनया चोपमया गुरोः गुरुपत्न्याश्च पावनत्वं समादरणीयत्वमव्यवहितसहचारित्वं प्रसादे सत्यभीष्टफलप्रदत्वं चाभिव्यक्तं भवति ।

यथा च—

पितुराज्ञां विना दुष्यन्तेन सह विवाहसम्बन्धं कृतवतीम्, अत एव भीतां लज्जितां त्रस्तां शकुन्तलामाश्वासयन् महर्षिः कण्वः कथयति "वत्से ! सुशिष्यपरिदत्ता विद्येवाशोचनीयासि संवृत्ता" (शाकु० अ० 4)। अत्रोपमा सर्वथा आश्रमवातावरणानुरूपा यतः कुलपतेराश्रमे विद्यादानं भवत्येव।

उपमातुरनुरूपतायाम्—

विदुषकः स्वबुभुक्षातीव्रतां द्योतयन् कथयति "दृढं विपणिकन्दुरिव मे उदराभ्यन्तरं दह्यते।" इयमुपमा सर्वथा वक्तुः स्तरानुरूपा। अनया च बुभुक्षाया विषमताभिव्यज्यते। यथा च—

समुद्रगृहद्वारदेशे स्थितं निद्रायमाणं विदुषकं दृष्ट्वा चेटी कथयति "भट्टिनि एष द्वारदेशे समुद्रगृहस्य विपणिगतं इव बलीवर्दः आर्यगौत्तमः आसीन एव निद्रायते।

अत्र दास्या समुद्रगृहद्वारदेशे स्थितः निद्रायमाणः विदुषकः विपणिगतेन निद्रायमाणेन बलीवर्देनोपमितः। एतच्च उपमा प्रदातुः उपमेयस्य स्तरानुरूपम्।"

अन्ते च अनुपमकविकौशलप्रदर्शनमेकमुदाहरणं समुपस्थाप्यते। स्वयंवरसभायामुपस्थिना इन्दुमती क्रमशः एकैकं राजानमवलोकयन्ती तत्परिचयं प्राप्य तमनभीप्सन्ती अग्रे प्रसर्पति। एतामवस्थां वर्णयन् कविः कथयति—

सञ्चारिणी दीपशिखेव रात्रौ,
यं यं व्यतीयाय पतिम्वरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे,
विवर्ण भावं स स भूमिपालः॥

अत्र कविना रूपयौवनसम्पन्ना तरुणी इन्दुमती दीपशिखया उपमिता। तया अस्वीकृता अत एव परिखिन्नमानसा विवर्णभावमापन्ना राजानश्च तमसाक्रान्ते राजमार्गस्थितैर्हर्म्यैस्तुलितः। अत्रोपमानोपमेययो सादृश्यं यद्यपि श्लिष्टं तथापि न क्लिष्टं नाप्यस्पष्टम्। दीपशिखोपमया च इन्दुमतया यौवनगतरूपलावण्यस्योद्दीपकता तदप्राप्तौ विषादस्यभिव्यक्तिश्च कृता।

काव्यमर्मज्ञाः सहृदया अनयोपमया अत्यन्तं प्रभाविताः कविं दीपशिखोपाधिना पुरस्कृत्य तं 'दीपशिखाकालिदास' इति व्यवजहुः।

एतावता निबन्धेन इदमतीव स्पष्टं यत् कविः कालिदासः वस्तुतः 'कविकुलकुमुदकलाधरः' तथा तस्य विषये प्रचलितैषा सूक्तिः नूनं सत्यम्—

"उपमा कालीदासस्य भारवेरर्थगौरवम्।"

## 32
## कालिदासस्य प्राकृतिकसौन्दर्यम् ।

महाकवयः स्वेषां सुमधुरकमनीयकल्पनैः विविधप्रकृतिसौन्दर्यदृश्यानि वर्णयन्तः तत्सहजसौन्दर्यसर्वस्यसंप्रकाशनपूर्वकं पाठकानां मनांसि आनन्दाऽद्भुतरसेषु निमज्जयंतीति विदितचर एवायं विषय विज्ञानाम् । एतादृशकविषु मध्ये कालिदासकवीन्द्रः आद्य इत्यत्र तस्य प्रकृतिवर्णनान्येव परमोदाहरणानि भविष्यन्ति ।

प्रस्तुते एतत्कवेः प्रकृतिवर्णनवैशद्यं, एतद्वैशद्यमनु अनुपदं झटिति भासमानं एतस्य प्रकृतिसहजीवनविधानञ्चात्र संग्रहेण संदर्शयितुकामः ।

स्थाण्वाऽश्रमप्रकृतौ व काण्डे वसन्तर्तु विजृम्भणं वर्णयन् एष कवीन्द्रः स्वकुमारसम्भवे—

लग्नद्विरेफांऽजनभक्तिचित्रम्,
मुखे मधुश्रीस्तिलकं प्रकाश्य ।
रागेण बालाऽरुणकोमलेन,
चूतप्रवालोष्ठमलंकारः ।। सर्गः 3–70 ।।

अत्र वसन्तलक्ष्मीः (वसन्तशोभा) वासंताऽभरणैः स्वशरीरमलंकुर्वाणा विश्वसम्मोहनं यथा विलसति, एवमेव कालिदासकाव्यलक्ष्मीरपि मनोहरैः प्राकृतिकाऽलंकरणैरेव स्वकाव्यशरीरमलकुर्वती साक्षान्महालक्ष्मीरिव भुवनमोहनं यथा अत्र भासते । भासयति चात्र पाठकान्तरङ्गाणि । एतादृशी सहजशोभा कस्य वा सचेतनस्य मनोनेत्रोत्सवं न विदधाति ? कस्य वा मानसं अद्भुतरसे न निमज्जयति ?

अत्र कालिदासकाव्यपात्राणां प्रकृतिशोभालक्ष्म्या साकं अभेदो वर्णितप्राय आसीत् । अतोऽत्र एवं ध्वन्यते यत् मानवशरीरस्य केवलप्राकृतिकसुन्दरवस्त्वलंकरणमेव सहजाऽद्भुताऽलङ्करणमिति, स्वर्णाद्याभरणधारणं न तथा शोभाऽवहमिति च । एवमेव—

बालेन्दुवक्राण्यविकासभावात्,
बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां,
नखक्षतानीव वनस्थलीनाम् ।। कुमार० ।।

कुल्यांऽबोभिः पवनचपलैश्शाखिनो धौतमूलाः,
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन ।
एते चाऽर्वागुपवनभुवि छिन्नदर्भाङ्कुरायां,
नष्टाशंका हरिणशिशवो मंदमंदं चरन्ति ।। शाकु० ।।

मुक्तेषु रश्मिषु निरायतपूर्वकायाः,
निष्कंपचामरशिखा निभृतोर्ध्वकर्णाः ।

आत्मोद्धतैरपि रजोभिरलंघनीया:,
धावन्त्यमी मृगजवाऽक्षमयेव रथ्या ।। शाकु० अंक 1 ।।

अत्र स्थावरप्रकृति चित्रणमिव जगमप्रकृतिचित्रणं च कालिदासीयं आनन्द-विस्मयौ समं सञ्जनयन्त्येव । उत्तमचित्रकारस्यापि एतादृशप्रकृतिचित्रणैं पुण्यं दुर्लभमिति वक्तव्यम् । पवित्राऽज्यधूमादय: अत्र प्रकृतिसौन्दर्यदोषका: । किञ्च चराचर-प्रकृतौ आत्मीयप्रकृताविव सहानुभूत्यादिभि: प्रकृतिसहजीवनं कालिदासीयपात्राणां सहजसिद्धमिति, प्रियतरमिति च वक्ष्यमाणै: श्लोकै: स्पष्ट ज्ञायत एव । वसिष्ठाऽश्रमं प्रतिगन्तारौ दिलीपदम्पती—

सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।
आमोदमुपजिघ्रन्तौ स्वनि: श्वासाऽनुकारिणम् ।।
(रघु० प्रथमसर्ग:)

अत्र अरविन्दाऽमोदस्य दिलीपदम्पत्यो: नि:श्वासाऽनुकारित्ववर्णनेन, स आमोद: तयो: स्वनि:श्वासवायुरिव आत्मीय:, प्रियतमश्च संवृत्त इति ज्ञायते । अनेन एतयो: प्रकृतसहजीवनविधानं प्रस्फुटमेव । एवमेव—

हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ।। रघु० 1 ।।

तत्रैव—

परस्पराऽक्षिसादृश्यमदूरोज्झितवर्त्मसु ।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाऽबद्धदृष्टिषु ।।

अत्र मार्गशाखिनां नाम जिज्ञासारूपेण मृगद्वन्द्वेषु आत्मरूपसादृश्याऽवलोकनोत्साहरूपेण च शीलेन एतद्दम्पत्यो: चराऽचरप्रकृतौ दृश्यमानं सर्वभूतेषु आत्मीयत्वं आत्मौपम्यदिदृक्षाऽदिरूपं वसुधैककुटुम्बकत्वशीलं सहजसिद्धमित अत्र स्पष्टमेव । 'नाविष्णु: पृथिवीपति' इति सूक्त्या विष्णुवंशसम्भूतयो रेतयो: एतादृशविशिष्टविश्व-भावना, 'सर्वं विष्णुमयं जगत्' इति सर्वत्र परमेश्वरांशदर्शन भावना च युज्यत एव—

'कारणगुणा: कार्ये संक्रामन्ति' इति हि तार्किकन्याय: ।

वसिष्ठाऽश्रमं प्रविष्टयोरेतयो: दृष्टिगोचरम् प्राप्त: तदाश्रमप्रान्तप्रदेश: इत्थं भूत:—

सेकान्ते मुनिकन्याभि: तत्क्षणोज्झितवृक्षकम् ।
विश्रम्भाय विहङ्गानामालवालाम्बुपायिनाम् ।।
आकीर्णं ऋषिपत्नीनां उटजद्वाररोधिभि: ।
अपत्यैरिव नीवारभागधेयोचितै: मृगै: ।। रघुवंश सर्ग 1 ।।

येषां यादृशी भावना तादृगवलोकनं, एवं चराऽचरप्रकृतिप्रेमरूपं एतयो: प्रकृति-सहजीवनविधानं कालिदास: दिलीपकुमारे रघुमहाराजेऽपि सम्यक् एव प्रतिफलितं चकार । गुरवे दक्षिणार्थं स्वान्तिकमागतं कौत्सं प्रति रघु:—

आधारबन्धप्रमुखैः प्रयत्नैः,
संवर्धितानां सुतनिर्विशेषम् ।
क्वचिन्न वाय्वाऽदिरूपप्लवो वः,
श्रमच्छिदामाश्रम पादपानाम् ॥
क्रियानिमित्तेष्वपि वत्सलत्वा-
दमग्नकामा मुनिभि कुशेषु ।
तदङ्कशय्या च्युतनाभिनाला,
कच्चिन्मृगीणामनघा प्रसूतिः ॥

रघुकर्तृकैरेतैः कुशलप्रश्नविधानैः, रघुसार्वभौमे रामचन्द्रे इव 'सर्वभूतहितेरतत्वं' चराऽचरप्रकृतिप्रणयित्वं, परार्थैकफलगुणवत्वं, आत्मौपम्येन सर्वत्र समदर्शनत्वमित्यादयो गुणाः रघोः विष्णुवंशसंभूतत्वं विशेषतः प्रकृतिसहजीवनप्रियत्वरीतिं च प्रस्फुटं प्रकाशयन्ति ।

एवमेव कालिदासः स्वीयं सहजीवनप्रणयित्वं स्वपार्वतीशकुन्तलापात्रयोः प्रत्येकं प्रदर्शयाञ्चकार । तपश्चरणकाले गिरिजा तपोवनस्य वृक्षानेव संवर्धयत्—

अतन्द्रिता सा स्वयमेव वृक्षकान्,
घटस्तनप्रस्त्रवणैः न्यवर्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां,
न पुत्रवात्सल्यमपाकरिष्यति ॥ कुमार० 2 ॥

अत्र 'वृक्षकान्' इति अलपार्थे 'कन्' प्रत्ययप्रयोगेण वृक्षेषु शैशवत्वं, तत्पालिकायां गौर्यां जननीत्वं च द्योत्यते, एतस्याः एतज्जननीत्वं अग्रे जगज्जननीत्वरूपेण परिणमति यतः पार्वतीपरमेश्वरौ—

"..........प्रपंचमातापितरौ.......... ।"

भवतः । अतः एतस्या भाविजगज्जननीत्वं आदौ वृक्षसंवर्धनकाले कालिदासः तस्या प्रकृतिसहजीवनत्वरूपेण प्रदर्शितवान् । अत्र वृक्षैस्साकं गौर्याः न केवलं सहजीवनं, किन्तु वृक्षेषु विजातीयेषु अपि एतस्याः स्वाऽपत्यत्वदर्शनं च वर्णितम् । स्वाऽपत्यायैव मातुः स्तनप्रस्त्रवणं संजायते । एतादृशः प्रकृतिप्रणयित्वस्वभावः, शकुन्तलायामपि सम्यक् कविना संदर्शितः—

"..........शकुन्तला—सखि ! न केवलं ततनियोगः अस्ति, ममाऽपि सोदरस्नेह एतेषु (तरूफ) ।" एतस्याः सोदरस्नेहमेनं घनिष्ठं कविः कण्वमुखेन एवं विशदीकृतवान् । शकुन्तलायाः बन्धुकल्पानां तपोवनतरुणामनुमतिं मुनिः तस्यै एवं पृच्छति—

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,
नाऽदत्ते प्रियमंडनाऽपि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

अनेन शकुन्तलायाः प्रकृतिसहजीवनविधानेन प्रकृतिप्रेम्णा च एषा तपोवनस्थ-वृक्षलतासु लतारूपा, पुष्पेषु पुष्परूपा परिमलरूपा च सती तत्तपोवनप्रकृतेः पृथक् कर्तुं न शक्या आस्ते न चेच्छकुन्तला, सर्वं कण्वतपोवनं शुष्कप्रायं निष्कलं च स्यात् । एवं वृक्षेष्विव पशुपक्ष्याऽदिष्वपि एतस्याः सहजं प्रेम मेदुरं दृश्यते । पतिगृहं गच्छन्त्याः एतस्याः वियोगमसहमानः कश्चिन्मृगपोतः एवमेनां निवारयितुकामः । कण्वमहर्षे-र्वचनमेतत्—

यस्य त्वया व्रणविरोपणमिंगुदीनां,
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिर्वाधितको जहाति,
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ।। शकु० 4 अंक ।।

एतस्याः बाल्येवयसि एवं रूपं विश्वमोहनं तस्याः विश्वप्रेम, एनां भाविकाले 'भरतभारतं' अकरोत् इत्यत्र न सन्देहः । किंच पार्वतीशकुन्तलापात्रयोः सुन्दरप्रकृति-स्त्वलंकरणप्रियत्वं, अतितरां दृश्यते । गिरिजाईश्वरपरिचयार्थं तत्समीपगमनसमये एवमलंकुर्वाणा, साक्षात् जंगमप्रकृतिलक्ष्मीरिव एवं प्रकाशते—

अशोकनिर्भर्त्सितपद्मराग–
माकृष्ट हेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिंदुवारं,
वसंतपुष्पाऽभरणं बहंती ।। कुमार० 3/23 ।।

आवर्जिता किंचिदिव स्तनाभ्यां,
वासो वसाना तरुणाऽर्करागम् ।
पर्याप्तपुष्पस्तबकाऽवनम्रा,
संचारिणी पल्लविनी लतेव ।। कुमार० 3/24 ।।

अत्र 'संचारिणी..........लतेव' इति लतौपम्येन तस्या लतालक्षणलक्षितत्वं कविना सम्यक् वर्णितम् । किंतु लतायाः गमनशक्त्यभावात् गिरिजाया एव आधिक्य वर्णनेन अत्र 'गिरिजा', 'व्यतिरेक' नाम्ना अलंकारेण च भूषिता आसीत् । परमार्थतः गिरिजा 'प्रकृतिस्वरूपिणी' खलु । एवमेव शकुन्तलाऽपि तपोवन प्रकृतौ तन्मयीभूता अंगाङ्गीभावेन वर्णिता—

अधरः किसलयरागः,
कोमलविटपाऽनुकारिणौ बाहू ।
कुसुममिव लोभनीयं,
यौवनमंगेषु सन्नद्धम् ।।

अत्र पुष्पितायाः लतायाः सौकुमार्यत्वसौन्दर्यत्वादिकं शकुन्तलाशरीरेऽपि संदृश्यते । अतः प्रकृत्या सह एतस्याः अविनाभावसंबंधः, आत्मीयता चावलोक्यते । एवं एतस्याः प्रकृतिसहजीवनत्वं सुस्पष्टमेव ।

इतः परं कालिदासस्य ऋतुवर्णनवैभवप्रदर्शनाय द्वित्राण्युदाहरणानि प्रसूयते । ग्रीष्मर्तु वर्णनम्—

सुभगसलिलाऽवगाहाः पाटलसंसर्गसुरभिवनवाताः ।
प्रच्छयसुलभनिद्राः दिवसाः परिणामरमणीयाः ॥

हेमन्तर्तु वर्णनम्—

प्रभूतशालिप्रसवैश्चिानि,
मृगांऽगनायूथविभूषितानि ।
मनोहरक्रौंचनिनादितानि,
सीमांतराण्युत्सुकयंति चेतः ॥

उपर्युक्तरीत्या एतादृशसुमनोहरसुन्दरप्रकृतिचित्रणैः पाठक प्रकृतिं पल्लवितां कुसुमितां च कृत्वा कालिदासकवीन्द्रः आलंकारिकपद्धत्या अस्मभ्यं शतादृशं काव्यसंदेशं कमनीयं प्रदत्तवान्—

"भिन्नमानवेषु मध्ये परस्परसहजीवनं तज्जीवितभ्यः, माधुर्यत्वं, प्रसन्नत्वं, जीवितचारितार्थ्यं च प्रददाति ।"

## 33

## उत्तररामचरिते भवभूतिर्विशिष्यते ।

इह खलु जगति यावन्ति सन्ति रूपकाणि तत्र कविकुलशेखरमणेस्तत्र भवतो भवभूतेरमृतधारावर्षिलेखनीसम्भूतमुत्तररामचरितमेव रमणीयतया सरसहृदयैर्विद्वद्-वृन्दैर्भृशमेवादृतम् ।

उत्तररामचरितं हि भवभूतेरुत्कृष्टतमं रूपकं तत्र तस्य नाट्यप्रतिभा स्वीयं प्रकाशं विकिरन्ती दृग्गोचरी भवति । यद्यपि प्रकृतेर्गभीरत्वाद् तस्य मालतीमाधव-महावीरचरितोत्तररामचरिताभिधेयेषु त्रिष्वपि रूपकेषु भावप्रवणता वीक्ष्यते परमुत्तर-रामचरिते तु तत्प्रभावोऽतितरामेव परिस्फुरति । विषण्णातावेदने द्वे अपि तत्र नितरां सान्द्रतामासादिते विलोक्येते । तत्र दर्शको भावानां स्निग्धं चित्रणं चेदेकत ईक्षते तदा स अपरतस्तस्मिन् प्रकृतेराहवस्य चोत्कटं भयावहं दृश्यञ्च प्रेक्षते ।

उत्तररामचरिते कविघटनानां संघटनं मनोविज्ञानानुमोदितपद्धत्या विदधाति । कविवररेण्येनास्मिन्नाटके दशरथनन्दनस्य मर्यादापुरुषोत्तमस्य रामस्योत्तरचरितं वर्णितम् ।

नाटकेऽस्मिन् बहवोंऽशाः कविकल्पनाप्रसाधिताः समुपलभ्यन्ते । आलेख्यदर्शनम्, रामवासन्त्योः कानने मिलनम्, रामाग्रे सीताया अदृश्यरूपे उपस्थितिः, प्राचेतसाश्रमे कौसल्याजनकादीनां सम्मेलनं वशिष्ठेन सह च साक्षात्कारः उत्तररामचरितस्य रामाग्रेऽभिनयश्चेति ।

संस्कृतवाङ्मयेऽत्र नाटकस्यालेख्यदर्शनाङ्कोऽनुपमः सर्वथापूर्वश्चास्तिा अस्य प्रयोजनविषये विद्वद्ववरेण्यानामनेका विप्रतिपत्तयो विद्यन्ते। केषाञ्चिन्मते चित्रदर्शनं सीता निर्वासनव्यापारस्यासाधारणमुपकारकारणम् चित्रदर्शनेन। कविना निर्वासनस्य भूमिका निबद्धेत्यन्येषामभिमतम्। अस्तु किमपि प्रयोजनं स्यात् महाकवेः कवित्वप्रतिभाया ज्ञानन्तु भवत्येव। नाटकस्य वैशिष्ट्यं विलोक्यैव शोभनमुदीरितं विक्रमार्केण—

"उत्तरे रामचरिते भवभूतिर्विशिष्यते।"

उत्तरे रामचरिते भवभूतिः यत्र यत्र यया यया दिशा भावनिवहं प्रकाशयितुं प्रयतते तत्र तत्र तथैव निष्पाद्य प्रणयतिमानसमतितराम्।

करुणरस प्रियोऽयं कविवरः यथा स्यवमेव कथयति नाटके—

एको रसः करुण एव निमित्तभेदात्,
भिन्नपृथक्पृथगिवाश्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान्विकारान्,
अम्भो यथा सलिलमेव हि तत्समस्तम्॥

करुणरस प्रवाहे महाकविर्भवभूतिः कालिदासमप्यतिशेते।

हा हा देवि! स्फुरति हृदयं स्त्रंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालयत्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवात्तरात्मा
विष्वङ्मोहः स्थगयति कथं मंदभाग्यः करोमि॥

अन्यच्च जानकीशोकोच्छ्वसितवाष्पनयनाया वनदेव्या वासन्त्या वाक्येन वज्रसारमपि कठिनं शुष्क हृदयं शतधा विदीर्यते यच्च—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
त्वामेव शान्तमथवा किमिहोत्तरेण॥

इत्यादि वाचा महाकवेर्विमलं चित्तं सम्यगनुमातुं शक्यते यद्धि प्रतिपदं परदुःखकातरताप्रतिमूर्तिं परिगृह्य समभ्यनन्दयत्यस्मानतितराम्।

भवभूतेः करुणरसप्रशसायां गोवर्धनाचार्येणापि साधूदीरितम्—

भवभूतेः संबन्धात् भूधरभूरेव भारती भाति।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रीवा॥

सत्यमेव करुणरसवर्णनेऽयं कविरपि सफलो बभूवास्मिन्नाटके। एतावत्कालपर्यन्तं करुणरसे विश्वस्मिन् तत्समः कोऽपि कविर्नाजायत।

प्राकृतिकदृश्यानां वर्णने सुनिपुणोऽयमिति—

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।

वहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥

अपि च—

स्निग्धश्यामा क्वचिदपरतो भीषणाभोगरुक्षाः
स्थाने स्थाने मुखरककुभो झांकृतैर्झिकृतानाम् ।
एते तीर्थाश्रमगिरिसरिद्‌गर्तकान्तार मिश्राः
संदृश्यन्ते परिचितभुवो दण्डकारण्य भागाः ॥

इत्यादिषु यादृशमाश्चर्यमयं सरसञ्च प्राकृतिकवर्णनमस्ति भावसाम्यञ्चोपलभ्यते तादृशमन्येषां कवीनां रचनासु न परिलक्ष्यते ।

अन्यत्रापि स्थाने स्थाने नदीपर्वतारामप्रस्रवणोपवनवर्णने कविशिरोमणिना स्वचातुर्यं प्रदर्शितं तत्रापि च प्रशंसनीया विशेषतेयं यत् वर्णनसमये कविना कथाप्रसङ्ग कथमपि न परित्यक्तः । यथा खलु कालिदासप्रमुखाः महाकवयः प्रकृतिवर्णने कथांशं विसृज्य तस्मिन्नेव प्रवहन्ति तथायं कविर्न प्रावहत् ।

भाषायां भवभूतेः सर्वथाधिपत्यमस्ति । सैव भाषाभिनन्दनीयास्ति यथा वर्णनीयस्य चित्रमपि चक्षुषोरग्रत समुपस्थितं स्यात् । यथा—

एते ते कुहरेषु गद्‌गद्‌नदद्‌गोदावरीवारयो
मेघाऽलम्बितमौलिनीलशिखराः क्षोणीभृतो दाक्षिणाः ।
अन्योन्यप्रतिघातसंकुलचलल्कल्लोलकोलाहलै
रुत्तालास्त इमे गंभीरपयसः पुण्याः सरित्सङ्गमाः ॥

अन्यच्च—

इह समदशकुन्ताक्रान्तवानीरमुक्त-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्त्रोतसो निर्झरिण्यः ॥

इत्यादिषु पद्येषु पठ्यमानेष्वेव नदीपर्वतादीनां चित्रमिव नयनयोः पुरतः स्फुरति ।

लवचन्द्रकेतोर्युद्धस्य स्वाभाविकं वर्णनं तस्य भाषां विलोक्य च कस्यचिच्चेतसि हर्षः, उत्साहश्च नोत्पद्यते ।

नाटकेऽस्मिन् पदवाक्यप्रमाणज्ञस्य भवभूतेः प्रेमचित्रणमणि स्वाभाविकं सुपवित्रञ्च वर्तते । कालिदासदिवत् तत्प्रेम वासनामयं नास्ति ।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरूपाधी-प्रीतय संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं-
द्रवति च हिमरश्यावुद्‌गते चन्द्रकान्तः ॥

इत्यत्रं-अपि च दाम्पत्यप्रेमप्रतीकम्—

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासुयत् ।
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ॥

अत एवं समुपवर्णितैः कतिपयविचाराबिन्दुभिर्ज्ञायते यत् रसेषु करुणरसस्यैव प्राधान्यम् । तत्र करुणे भवभतिरेव सर्वानतिशेते यथा शृंगारे कालिदास एवाऽऽसीत् । तस्य कवेर्वैशिष्ट्यं तु प्रत्प्रतिपादितायामुत्तररामचरिताख्यनाटकरचनायां द्रष्टुं शक्यते । तदाश्रित्यैव विद्वद्धौरेयाणां सरणौ प्रचलितोऽयमाभाणकः सत्यमेव—

उत्तररामचरिते भवभूतिर्विशिष्यते ॥

## 34

## राजस्थानीयमाधस्य वैशिष्ट्यम् (1983)

## (काव्येषुमाघः, कवि कालिदासः)

'धन्यास्तु ये भारतभूमिभागे' इति नितान्ते प्रसिद्धे भारते अनेके कवयः समजनिष्टः । परशतेषु कवीनां काव्येषु सत्स्वपि लघुत्रयीति नाम्ना प्रसिद्धं कालिदास प्रणीत काव्यत्रयं, वृहत्त्रयीनाम्ना प्रणीतञ्च किरातार्जुनीयम्, शिशुपालवधं, नैषधीय-चरितञ्च काव्यत्रयमहरहः स्वीकृतं मनीषीभिः । वृहत्त्रयामपि निखिलमहाकाव्यलक्षण-ग्रन्थतया, अतिशय प्रसन्नतया, उपयुक्तव्याकरणप्रयोगप्राचुर्येणातिव्युत्पादकतया च महाकविमाघविरचितं शिशुपालवधं महाकाव्ये व नायकायते इत्यत्र नास्ति सन्देहो लेशः । महाकाव्यस्यास्य प्रणेता काव्यनाम्नैव सर्वत्र भारते प्रतीतोऽयं माघ कस्मिन् देशे, कदा, कतमं जनपदं स्वीयं जन्माऽलंचकार इति जिज्ञासायां महामहोपाध्याय पं. दुर्गाप्रसाद महोदयानुसारेण खिष्टाद्धीय एकादशशतकोत्तरार्द्धे मालवदेशशासतः धारानगराधिपतेः श्री भोजदेवस्य समकालीन आसीदिति प्रतीयते । परञ्च एतादृशे समयनिर्णयादे व्यतिकरे भोजप्रबन्धचिन्तामणि मन्यादयो न श्रद्धापयमध्यासते यतः अत्र प्रतीतेषु बहुभिर्निणयेषु भूयान् विपर्यायाः सम्यगुपलभ्यन्ते । यत्किञ्चिदपि भवेत् परञ्चायं कवि खिब्दाब्दीय नवमशतकात् कथमपि नार्वाचीनः । यतोहि काश्मीरेषु नवयोत्तरशतकभागे वर्तमानः श्रीमदानन्द वर्धनाचार्यो ध्वन्यालोकस्य द्वितीयोद्योते—

त्रासाकुलः परिपतन् परितो निकेतान्
पुंभिर्न कैश्चिदपि धन्विभिर न्वबन्धि ।
तस्थौ तथापि न मृगः क्वचिदङ्गनाणां
माकर्णपूर्णनयनेषु हतेक्षणश्रीः ॥

रम्या इति प्राप्तवतीः पताका रागंविवक्ता इति वर्धयन्ती ।
यस्मामसेवन्त नमद्वलीकाः समं वधूभिर्वलमीर्युवानः ॥

इत्यादि शिशुपालवधादुदाहृतवान् । एतेन नवमशतकाभार्वाचीनः इति नितरां प्रसिध्यति ।

गुर्जरदेशवास्तव्योऽयं कवि इति पूर्वोद्धृतप्रबन्धेभ्यः रैवतिकागिरि वर्णने च प्रतीयते। तस्मिन् प्रदेशे भीनमालाख्यग्रामेऽयं संजातः इति सुनिश्चितम् । भीनमालश्चायं राजस्थाननिर्माणात्प्राक् गुर्जरदेशे आसीत् । परञ्च सम्प्रत्यस्य ग्रामस्य राजस्थानान्तरतया राजस्थानीयोऽयं माघ इति निर्विचिकित्सा कथितं शक्यते । अस्य पितामहः श्रीवर्यलाखस्य धर्माधिकारी नियोजितः सुप्रभदेवोनाम प्रसिद्धोऽऽसीत् । एतत् शिशुपालवधान्ते कविवंशवर्णनप्रसङ्गे कविना स्वयवेवोट्टकितम्—

"सर्वाधिकारी सुकृताधिकारः श्रीवर्मलाखस्य बभूव राज्ञः" इति तस्यैव सुप्रभदेवस्यदत्तकाख्यस्तनुजोऽभूत् । यं दत्तकं जनाः वीक्ष्य कृष्णद्वैपायनोऽवतारोऽयमिति परिकल्पयान् चक्रुः । तदैतस्य दत्तकस्य सूनोर्माघस्य शिशुपालविधात् कोऽप्यन्यो ग्रन्थो नोपलब्धः । परञ्चौचित्यविचारचर्चायाम्—

बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते ।
न विद्यया केनचिदुधृतं कुलं हिरण्यमेवार्जय निष्फलाः कला ॥

एतद् पद्यं क्षेमेन्द्रेण माघकविनाम्नोद्धृतमस्तीति कश्चिदन्योऽपि ग्रन्थः माघविरचितो आसीदेति अनुमीयते । महाकाव्यस्यानेकासु टीकासु विद्यमानाध्वपि मल्लीनाथकृता टीका विशिष्टस्थानमाप्नोति ।

माघविषयमधिकृत्य—"नवसर्गगतेमाघे नवशब्दो न विद्यते ।" इति किवदन्ती वस्तुतः सत्यमेव वर्तते । यतो ह्यस्य पठनेन निसन्देहेन कथितं शक्यते यदस्य प्रौढ़शब्दगुम्फः, अलकारविन्यासेन शब्दार्थचमत्कारोऽपि स्थाने-स्थानेऽभिनन्दनीयः । भारविरर्थगम्भीरगवेषणमेव, दण्डीपदलालित्यमेव, परन्माघस्तु सर्वैस्तैर्गुणैर्युक्तः । अत एव—

उपमा कालीदासस्य भारवेरर्थगौरवम्
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥

इति विद्वत्समाजे आभाणकः प्राचलत् प्रमाणिक एव । यद्यपि कविसमाजे कालीदासस्य प्रशंसा महती प्रतीयते । परञ्च कालिदासः केवलं उपमाप्रसङ्गे एव पटीष्ठः । अयञ्चार्थगाम्भीर्यादिभिर्गुणैः कालिदासादभ्यर्हितः । अन्येषां कवीनां मतमिदं वर्तते यत् केवलं शब्दकविः, अर्थगाम्भीर्यस्य का कथा, सामान्यतः तत्रौचित्यमपि न दरीदृश्यते । यथा नारदमुनेः हस्तिनाऽपितु हिमालयेन सादृश्यं कियदौचित्यं प्रकटयति माघस्य । मुनेरागमनसमये शान्तिमयीचित्तवृत्तिर्भवितव्या, दिव्यप्रभावपूर्णवातावरणञ्च भवेत् इत्यैव मुनिसमागमवर्णनस्य सौन्दर्यं नाम । यथा शिशुपालवधे—

मधुरैरवशानि लम्भमयभपि तिर्यञ्चिशमं निरीक्षते ।
परितः पटु बिभ्रदेनसां दहनं धामविलोकितसमम् ॥

माघस्य विशिष्टं ज्ञानं शिशुपालवधे प्राप्यते-अनेन एकापि कीदृशी शिशुपालवधाख्या कृतिर्वर्तते इत्यनुमातुं शक्यते । यदत्र नगरीसौन्दर्यं वर्णनम्—

रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ।।

इत्येन वर्णितं भव्यानां निश्चितं मुदमादत्ते । एवमेव प्रकृतिसौन्दर्यमप्यस्यातिशेते यथा—रैवतकगिरिवर्णनप्रसङ्गे नवीनस्य किं लक्षणमिति विवेचयता महाकविना यत्समुपपतितं तन्नूनमनिर्वचनीयमिति नातिशयोक्तिलेशोऽपि यथा—

दृष्टोऽपि शैलः स मुहुर्मुरारेरपूर्ववद्विस्मयमाततान् ।
क्षणे क्षणे यन्नवतामुपैति तदैव रूपं रमणीयतायाः ।।

माघस्य तादृशं वैशिष्ट्यं मत्वैव—"काव्येषु माघः कविः कालिदासः" इति प्रांयुक्त । अन्यथा विशिष्टेषु काव्येषु सत्स्वपि काव्येषु माघ इति कथं संगच्छेत् । नास्ति एतादृशः कश्चित् शब्दो यो हि महाकविना अस्मिन् महाकाव्ये न प्रयुक्तः । अत एव—'नवसर्ग गते माघे नव शब्दो न विद्यते' इति प्राचीनाभाणकः प्राचलदिति कथयितुं निश्चितं पार्यते । यमकवर्णनप्रसंगे या शब्दावली दरीदृश्यते सा नितान्तं चमत्कारिणी । यथा—

नवपलाशपलाशवनं पुट स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः ।।

स्थाने स्थाने दार्शनिकमतानि प्रतिपादयता महाकविना स्वकीयमद्भुतं दार्शनिकत्वमपि प्रथितमेव । यथा सांख्यदर्शनस्य वर्णनम्—

उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन ।
बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः ।।

शिशुपालवधे स्थाने-स्थाने उचितव्याकरणप्रयोगान् दृष्टवां "वैयाकरणोऽयं माघः" इति ज्ञायते । यथा राजनीत्या सह व्याकरणसिद्धान्तानि वर्णयिता कविनोटङ्कितम्—

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ।।

प्राकृतवर्णनप्रसङ्गे नद्याः वर्णनम्—

एकत्र स्फटिकतटांशुभिन्न नीरा शीताश्मद्युतिभिदुराम्यसोऽपरत्र
कालिन्दी जलजनितश्रियः श्रमन्ते वैदग्धीमिह सरितः सुरापगापा ।।

माघेन सर्वेषां स्वपूर्ववर्तीकवीनां समुत्कृष्टगुणानां स्वकाव्ये समन्वयं विहितम् । तेन महाकविकालीदासात् काव्यसौन्दर्यं, उपमाचयननिपुणता, भारविकवेः अर्थगौरवं भट्टिनः व्याकरणपाटवं नीत्वा 'शिशुपालवधे' सन्निवेशः कृतः । अत एव 'माघेसन्ति त्रयोगुणा' इति केनचिदुक्तं तनूनं समीचीनमेवेति । यथा माघस्योपमालालित्यम्—

दधानमम्भोरुहकेसरद्युतिर्जटा शरच्चन्द्रमरीचिरोचिषम् ।
विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रव्रततीततीरिव ।।

पदलालित्यम्—

वदनसौरभलोभपरिभ्रमद् भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया ।।
मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मद ध्वनिभृता निभृताक्षरमुज्जगे ।।

अर्थगौरवम्—

अपशङ्कमङ्कपरिवर्तनोचिताश्चालिताः पुरः पतिमुपैतुमात्मजाः ।
अनुरोदितीव करुणेन पत्रिणां विरुतेन वत्सलतयैष निम्नगाः ।।

श्रूयते हि कदाचित् केनचिदेको वृद्धः पृष्ठेन यन्भवता के के ग्रन्थाः अभ्यस्ताः, यैरेतादृशं विशिष्टं ज्ञानं स्वजीवने आसादितम्–तेन वृद्धेनोत्तरितं यत् माघे मेघे गतं वयः ।

परम्परायामिदं प्रसिद्धं महाकविमाघः स्वप्राक्वर्तिं महाकविं पराभवितुं ऐहत । अत एव यथा भारविना सर्गादौ श्रीशब्दस्य प्रयोगो विहितः सर्गान्ते च लक्ष्मी-शब्दप्रयोगः कृतः, तथैव माघेनापि एषा रीति समासृता । अन्यादपि ये ये भावाः भारविना समाविष्टास्ते ते विशिष्यापद्धत्या माघेनापि विधाय एनं निरोजयामास । अत एवेदं पद्यं संगच्छते—

माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे ।
स्मरन्तो भारवेरेवकवयः कपयो यथा ।
तावद् भा भारवेर्भाति यावन्माघस्य नोदय ।।

## 35

## नैषधं विद्वदौषधम् ।

महाकविः श्रीहर्षः सुरगवी-काव्याकाशे विद्योतमानं स्वप्रभानिरस्तान्य-तेजः-प्रसरमनुपमं नक्षत्रम् । तस्यापूर्वा कान्तिः समग्रमपि वाङ्मयं रोचयिततताम् । महाकवेरेतस्य जनकः श्रीहीरो जननी मामल्लदेवी च । तथा हि—"श्रीहर्षं कविराज-राजिमुकुटालंकारहीरः सुतं, श्रीहीरः सुषवे जितेन्द्रियचयं मामल्लदेवी च यम् ।" कान्यकुब्जेश्वरस्य जयचन्द्रस्याश्रयमाशिश्रियत् कविरयम्, तदाहृतिमविन्दत च ।

"ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात् ।"

अतोऽस्य जनिकालो द्वादशशताब्द्या उत्तरार्धोऽङ्गीक्रियते । श्रीहर्षो महाकवि-र्महायोगी च । उभयत्रापि चरमोत्कर्षं लेभे । "यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् । यत्काव्यं मधुवर्षि" (नै० 22–153) । सर्गान्तश्लोकेषु ग्रन्थाष्टकस्या-न्यस्य नामग्राहं गृह्यते तेन । तत्र चाद्वैतवेदान्तप्रतिपादकः खण्डनखण्डखाद्यमेवैको

ग्रन्थः साम्प्रतमुपलभ्यतेऽन्ये च लुप्तप्राया एव। सायासमेतत् तस्य महाकाव्यं ग्रन्थपश्चात्र विन्यस्तास्तेन महता श्रमेण। अतः श्रमसाध्य एव महाकाव्यस्यैतस्यार्थावगमोऽपि—

ग्रन्थग्रन्थिरिह क्वचिदपि न्यासि प्रयत्नान्मया,
प्राज्ञंमन्यमाना हठेन पठिती माऽस्मिन् खलः खेलतु।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादयः—
त्वेतत् काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः॥

रमणीलावण्यं हरति चेतः, सचेतसो यून एव, न तु किशोराणाम्। तथैव श्रीहर्षकृतिः सुधीभिरेवास्वादनीया, न तु प्राज्ञमन्यैः।

यथा यूनस्तद्वत् परमरमणीयापि रमणी,
कुमाराणामन्तःकरणहरणं नैव कुरुते।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः,
किमस्या नाम स्यादरसपुरुषानादरभरैः॥

श्रीहर्षमहाकवेः कृतिर्नैषधचरितं कस्य न कृतिनो मानसमावर्जयति। बृहत्त्रय्यामन्यतमैषा कृतिः। भारवेः किरातार्जुनीयं, माघस्य शिशुपालवधं, श्रीहर्षस्य नैषधचरितं चेति त्रयमेतद् बृहत्त्रय्यां गण्यते। उत्तरोत्तरमेषामुत्कर्षश्चोररीक्रियते। एतद्भावनात्मकमेवैतदुद्गीर्यते—

तावद् भा भारतेर्भाति, यावन्माघस्य नोदयः।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥

श्रीहर्षस्य पाण्डित्यम्—श्रीहर्षो महाकविर्महादार्शनिको महावैयाकरश्चेत्यादिविविधविरुद्धगुणसमन्वयादतिशेते सर्वानन्यान् कवीन् पाण्डित्यप्रदर्शने वाग्वैभवे रुचिररचनायां भावाभिव्यक्तौ साधुशब्दसंकलने विद्यावैशारद्ये वक्रोक्तिव्यवहारे च। अनुपमवैदुष्यवैभवाविर्भावात् पाण्डित्यपुटपरिपाकप्रतिकाशः प्रतीयते प्रबन्धोऽस्य। नैकशास्त्रनिष्णातस्यानुपहता गतिरत्रेति 'नैषधं विद्वदौषधम्' इति साल्हादमुद्घोष्यते यशोऽस्य सुधीभिः। प्रतिपदं पदलालित्यावेक्षणात् 'नैषधे पदलालित्यम्' इत्यभिधीयते।

नैषधे पदलालित्यं प्रतिपदं प्रेक्ष्यते। क्वचित् प्रसादः, क्वचिन्माधुर्यम्, क्वचिच्च ओजोगुण लक्ष्यते। प्रसाद-माधुर्यगुणाभ्यां सह पदलालित्यं विचित्राभां प्रदर्शयति। काव्यस्य लयात्मकत्वं संगीतात्मकत्वञ्च श्रुतिसुखदत्वेन सममेव सहृदयहृदयावर्जकत्वेनोपतिष्ठते। नैषधे पदलालित्य प्राधान्यमवलोक्य विपश्चिद्भिः 'नैषधे पदलालित्यम्' इति साह्लादमुद्घोष्यते। कतिपयानि निदर्शनान्यत्र प्रस्तूयन्ते—

अधारि पद्मेषु तदङ्घ्रिणा घृणा,
क्व तच्छयच्छायलवोऽपि पल्लवे।
तदास्यदास्येऽपि गतोऽधिकारितां,
न शारदः पार्विकशर्वरीश्वरः॥ नैषधं 1-20॥

अहो अहोभिर्महिमा हिमागमे-
ऽप्यभिप्रपेदे प्रति तां स्मरार्दिताम् ।
तपर्तुपूर्तावपि मेदसां भरा,
विभावरीभिर्बिभरांबभूविरे ।। नैषधं 1-41 ।।

नलिनं मलिनं विवृण्वती, पृषतीमस्पृशती तदीक्षणे ।
अपि खञ्जनमञ्जनाञ्चिते विदधातै रुचिगर्वदुर्विधम् ।।
(नैषधं 2-23)

श्लोकेष्वेषु क्वचिदनुप्रासः क्वचिद् यमकं सौन्दर्याधायकम् । क्वचित् सौकुमार्यमेव पदानां श्रुतिसुखदत्वहेतुः । यथा—

धन्यासिवैदर्भिगुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ।।
(नैषधं 3-116)

सपीतेः संप्रीतेरजनि रजनीशः परिषदा ।
परीतस्ताराणां दिनमणिमणिग्रावमणिकः ।। 22-144 ।।

विविधविद्यापारदृश्वा श्रीहर्षः नैषधे स्वव्युत्पत्तिप्रदर्शनोपक्रमे प्रतिपदं क्लिष्टत्वं दुरूहत्वं चोपपादयति । विविधशास्त्रीयसिद्धान्तवर्णनात्, श्लिष्ट-क्लिष्ट-पद-प्रयोगात्, बहुज्ञता-प्रदर्शनाच्च स्वकाव्ये व्युत्पत्तिवारिधिं प्रथयति । स श्लिष्टप्रयोगादतिरिक्तं व्याकरण - न्याय - वैशेषिक - सांख्य-योग-वेदान्त-मीमांसा-चार्वाक-बौद्ध - जैनादिदर्शनानां दुरूहान् सिद्धान्तान् यत्र तत्र वर्णयति । विशिष्टदर्शनज्ञानमन्तरेण तदर्थावगमो दुष्कर एव । न केवलं पाश्चात्यविदुषामेव कृते, अपितु भारतीयविद्वत्तल्लजानामपिकृते नैषधं दुर्बोधमेव । पाण्डित्यप्रदर्शनस्य दुष्परिणामरूपत्वेन श्रीहर्षस्य कलापक्षः श्रियमश्नुते, भावपक्षश्च दौर्बल्यम् ।

पाणिनेः 'अपवर्गे तृतीया' (अष्टा० 2-3-6) सूत्रे व्यंग्यं कुरुते यद् अपवर्गविषये मोक्षविषये वा तृतीया प्रकृतिः स्त्रीपुंसातिरिक्ता क्लीबप्रकृतिरेवोपयुक्ता ।

उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मनः ।
अपवर्गे तृतीयेति भणतः पाणिनेरपि ।। नै० 17-70 ।।

'तदत्यन्तविमोक्षोऽपवर्गः सकलविशेषगुणोच्छेदो मुक्तिः' इति निरानन्दं मोक्षमाश्रित्य व्यंग्यं कुरुते यद् न्यायाभिमतो मोक्षो गौतमस्यैव मूर्खतमस्यैव मतं भवितुमर्हति—

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः ।। नैषध 17-75 ।।

वैशेषिकदर्शने किमिदं तमो भावरूपं अभावरूपं वा ? इति विचारे 'भासामभाव एव तमः', 'भाभाव एव तमः' इत्यादिरूपेण तमो विविच्यते । वैशेषिकदर्शनकृत कणाद एव उलूकापरपर्यायः । अतो दर्शनमेतद् औलूकदर्शनं निगद्यते । एतदाश्रित्यैव व्यंग्यं क्रियते यद् उलूक एव तमस्तत्त्वपरीक्षणे क्षमः, तन्मतं च ग्राह्यं ।

ध्वान्तस्य वामोरू विचारणीयां वैशेषिकं चारु मतं मतं मे ।
औलूकमाहुः खलु दर्शनं तत् क्षमं तमस्तत्त्वनिरूपणाय ।।
(नैषधं 22–35)

वेदान्तदर्शनानुसारं मुक्तौ जीवात्मनो ब्रह्मणि विलयेन ब्रह्मैव केवलमवशिष्यते, लोके तु जीवब्रह्मणोर्द्वयोरेव पृथगस्तित्वम् । एतन्मतमाश्रित्यैव व्यंग्यं प्रयुज्यते यन्मूर्ख एव स्वास्तित्वविनाशाय प्रवर्तिष्यते—

स्वं च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम् ।
इति स्वोच्छित्ति-मुक्त्युक्ति-वैदग्धी ब्रह्मवादिनाम् ।। नै० 17–74 ।।

श्रीहर्षोऽन्यदर्शनसिद्धान्तान् अपास्य अद्वैतवादमेव सर्वमान्यत्वेनाश्रयते—

श्रद्धां दधे निषधराङ्विमतौ मतानाम् ।
अद्वैततत्त्व इव सत्यतरेऽपि लोक ।। नै० 13–36 ।।

सरस्वत्या स्वरूपवर्णने एकस्मिन्नेव श्लोके बौद्धदर्शनस्य शाखात्रयसिद्धान्ता, शून्यवाद-विज्ञानवाद-साकारविज्ञानवादाः समुपस्थाप्यन्ते । यथा—

या सोमसिद्धान्तमयाननेव, शून्यात्मतावादमयोदरेव ।
विज्ञानसामस्त्यमयान्तरेव साकारतासिद्धिमयाखिलेव ।।
(नैषध 10–88)

एवमेव विविधा दर्शनराद्धान्ता इतस्ततः प्रकीर्णा उपलभ्यन्ते । यथा— "नास्ति जन्यजनकव्यतिभेदः०" (नैषध 5–94) । इत्यत्र सांख्याभिमतः सत्कार्यवादो विव्रियते । "सम्प्रज्ञातवासिततमः समपादि" (नैषध 21–118) इत्यत्र योगदर्शन प्रतिपादितः । संप्रज्ञातसमाधिर्निरूप्यते । "आदाविव द्वयणुकक्कृत परमाणुयुग्मम्" (नैषध 3–125) इत्यत्र वैशेषिकाभिमतः परमाणुवादः, मनोभिरासीदनणुप्रमाणै० (नैषध 3–37) । "जनस्य चेतोभिरवारिणमाङ्कितैः०" (नैषध 1–59) इत्यत्र मनसोऽणुत्वं प्रतिपाद्यते—

विश्वरूपकलनादुपपन्नं तस्य जैमिनिमुनित्वमुदीये ।
विग्रहं मखभुजायसहिष्णुर्व्यर्थतां मदर्शनि स निनाय ।।

इत्यत्र मीमासाभिमतं देवानां अरूपित्वं मन्त्ररूपित्वं च निर्दिश्यते । "स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता" (नैषध 2–61) इत्यत्र स्वतः प्रामाण्यं वर्ण्यते । "न्यवेशि रत्नत्रितये" (नैषध 9–71) इत्यत्र जैनाभिमत रत्नत्रयस्य वर्णनम् । सप्तदशसर्गे चार्वाकसिद्धान्त वर्णनमुपलभ्यते—

"अजस्रमभ्याशमुपेयुषां समं मुदैव देवः कविनाबुधेन च।"

इत्यत्र ज्योतिषसिद्धान्तवर्णनं प्राप्यते ।

माघस्य शिशुपालवधे काव्यसौन्दर्यं प्रेक्ष्य यथा भारवेर्भा अस्तमेति, तथैव नैषधे श्रीहर्षस्य वैदुष्यं विलोक्य भारविमाघौ द्वावेव निष्प्रभतां धत्तः । श्रीहर्षः कविता-कामिनीकान्तो भाषाप्रयोगविदग्धो विविधशास्त्रनिष्णातः रससिद्धः कवीश्वरो वर्तते । तस्य काव्यं प्रतिपदं तस्य व्याकरणविशेषज्ञतां भावगाम्भीर्यं पदमाधुर्यं भाषासौष्ठवं रसपरिपाकं च प्रकटयति । अनुपमस्तस्य समग्रेऽपि संस्कृतवाङ्मयेऽधिकारः ।

गीर्वाणवाणी वाणीश्वरमिव तं सेवते । स भाषां पुत्तलिकामिव नर्तयितुं प्रभवति । तदीहासमकालमेव समुपतिष्ठन्ति रसा, भावाः, कमनीया पदावली, विविधाश्चालंकारा । गूढातिगूढान्वितानि क्लिष्टानि पद्यानि स यथैव सारल्येन रचयितुमलं तथैव सरलानि सरसानि प्रसादगुणोपेतानि हृद्यानि पद्यानि । तस्य पद्यानि नारिकेलफलोपमानानि सन्ति, बहि कठोराणि, अन्तः माधुर्योपेतानि च । रसिकैः सहृदयैर्विविधशास्त्रनिष्णातैरेव तत्काव्यगौरवम् अवधारयितुं पार्यते । यथा केचन श्लेष प्रयोगा—

'चेतो नलं कामयते मदीयम्' (नै. 3–67) श्लेषमूलकमर्थत्रयमस्य । चेतः नलं कामयते, चेतः न लंकाम् अयते, चेतः अनलं कामयते । स्यादस्या नलदं विना न दलने तापस्य कोऽपि क्षम. (नैषध. 4–116) इत्यत्र नलदशब्दो द्वयर्थकः । पञ्चार्थकं पद्य यथा—

देवः पतिर्विदुषि नैष धराजगत्या,
निर्णीयते न किमु न व्रियते भवत्या ।
नायं नल खलु तवातिमहानलाभो,
यद्येनमुज्झसि वर. कतरः परस्ते ।। नै. 13–34

## 36

## महाकविबिल्हणस्तद्विक्रमाङ्कदेवचरितम् ।

अथवा

## उल्लेखेः कवयन्ति बिल्हणकविस्तेऽत्रैव संनह्यति । (1982)

जगति सुप्रसिद्धस्य महाकाव्यस्य विक्रमाङ्कदेवचरितस्य रचयिता महाकविबिल्हणश्चिरकालादेव महाकविष्वभिनन्द्यते । स हि चौरपञ्चाशिकां कर्णसुन्दरीनाटिकाञ्चापि प्रणिनाय । सुभाषितसंग्रहग्रन्थेषु बिल्हणनामांकितानि बहूनि पद्यान्युपलभ्यन्ते । कविवरजल्हण गुम्फित सूक्तिमुक्तावल्या मेव बिल्हणस्याष्टोतरशत पद्यानि विद्यन्ते । क्षेमेन्द्रराजशेखरकालिदासेष्वप्यन्य कस्यापि कवेः श्लोकसंख्या न तावतीं कोटिं भजते तत्र । प्रसादादिगुणेषु कालिदाससाम्यमयं प्राप्नोति ।

बिल्हणकवि. स्वजन्मना काश्मीरप्रदेशमलञ्चकार । तत्रैव प्रदेशे च तने स्वरचना रचिता । अस्य मते तत्प्रदेशादुत्तमः प्रदेशो नास्ति कविताविलासाय । अतः स्वमेव कथयति प्रथमसर्गे यत्—

सहोदरा. कुंकमकेसराणां
भवन्ति नूनं कविताविलासा. ।
न शारदादेशमपास्यदृष्ट
स्तेषां यदन्यत्र मया प्ररोह ।।

कवि प्रवरोऽयं किमपि चमत्कारपूर्णं काव्यं निर्माय स्वकृतेर्यशसश्च स्थैर्यमैच्छत् । तस्य पिता ज्येष्ठकलशः माता च नागदेवीति ख्यातासीत् ।

बिल्हणस्य काव्यरीतिर्नितान्तं सरसा प्रसादमयी मनोमोहिका चास्ति। स खलु वैदर्भीरीतिप्रियो वरीवर्ति। अत एव कथयति यत्—

अनभ्रवृष्टिः श्रवणामृतस्य
सरस्वतीविभ्रमजन्मभूमिः।
वैदर्भरीतिः कृतिनामुदेति
सौभाग्यलाभप्रतिभूः पदानाम्॥

सुप्रख्यातमेतत् 'विक्रमांकदेवचरितं' निखिलेऽपि संस्कृतवाङ्मये विशिष्टं पदं धत्ते एतद्धि महत्या भूमिकया सह प्रारभ्यते। प्रथमं तावत् सुललितायां भारत्यां देवानां स्तुतिरस्ति। ततश्च कविप्रकाण्डोऽयं कर्मण प्रशंसां खलानां दुष्टानां निन्दां काव्यचौराणाञ्चोपहासङ्करोति। अन्येषु काव्येषु नैतादृशी भूमिका विलोक्यते।

काव्येऽस्मिन् अनुप्रासा अत्यद्भुतप्रकारेण सन्निवेशिताः सन्ति कविना। उत्प्रेक्षाश्लेषोपमाद्यलंकाराणां प्रयोगे चातिप्रवीणोऽयं कविवरः। अलंकारास्तु स्वयमेव चमत्कारतया भवन्ति परमत्र तु श्लेषः प्रभृतयो दुरूहा अपि ते तथा ग्रथितास्सन्ति यच्चितं विस्मयस्य परां कोटिं नयन्ति। प्रथमसर्गे—

एकः स्तनस्तुङ्गतरः परस्य,
वार्तामिव प्रष्टुमगान्मुखाग्रम्।
यस्याः प्रियार्धस्थितिमुद्वहन्त्या,
सा पातु वः पर्वतराजपुत्री॥

अन्यच्च—

चोलस्य यद्भीतिपलायितस्य,
भालत्वचं कण्टकिनो वनान्ताः।
अद्यापि किं वा नु भविष्यतीति,
व्यपाटयन् द्रष्टुमिवाक्षराणि॥

इति श्लोकद्वयस्योत्प्रेक्षैवास्य प्रतिभां प्रकटयति।

विशीर्णकर्णा कलहेन यस्य,
पृथ्वीभुजंगस्य निरर्गलेन।
संगच्छतेऽद्यापि न डाहलश्रीः,
कर्पूरताटङ्कनिभैर्यशोभिः॥

अस्मिन् पद्ये शोभनः श्लेषो विद्यते।

ध्रुवं रणे यस्य जयामृतेन,
क्षीबः क्षमाभर्तुरभूत् कृपाणः।
एकागृहीता यदनेन धारा,
धारासहस्त्रं यशसोऽवकीर्णम्॥

इति श्लोके च महाकविना धाराशब्दे सुन्दरः श्लेषः प्रदर्शितः कृपाणञ्चोन्मत्तं प्रदर्श्याद्भुता कल्पनाशक्तिः प्रकटीकृतानेन।

उपमालङ्कारे तु कविचक्रवर्ती स कविकुलमुकुटमणे कालीदासस्य साम्यं प्राप बहुषु स्थलेषु । यथा खलु—

क्ष्माभृत्कुलानामुपरि प्रतिष्ठा—
मवाप्य रत्नाकरभोगयोग्यः ।
क्रमेण तस्मादुदियाय वंशः
शौरेः पदाद् गाङ्गइव प्रवाहः ॥

किञ्च—

तस्माद्भूदाहवमल्लदेव—
स्त्रैलोक्यमल्लापरनामधेयः ।
यन्मण्डलाग्रं न मुमोचलक्ष्मी,
र्धाराजलोत्था जलमानुषीव ॥

अति सरसा रम्या च विद्यते उपमात्र पद्यद्वये ।

एवमन्येषामलंकाराणां प्रयोगेऽपि कुशलोऽयं कविचन्द्रः । काव्येऽस्मिन् कविना कृतानि वर्णनानि मनोहराणि वर्तन्ते । ऋतुवर्णने तु सर्वानप्यतिशेते कविः ।

कृतक्षणं क्षुद्रनदीसमागमे, तरङ्गिणीनाथमवेक्ष्य सम्प्रति ।
विलंघ्य मार्गं सहसा महापगाः पतन्ति नीचेषुनदान्तरेषु ॥

चरित्रचित्रणेऽपि चातुर्यातिशयं धारयति कविवरेण्योऽयम् । विक्रम श्रीतैलपाहवमल्लदेवादीनां चरित्रवर्णने एवास्य कविता चातुरी प्रकटीभवति ।

अनेन प्रकारेण सर्वेषु क्षेत्रेषु बिल्हणोऽतिकौशलं धत्ते नास्त्यत्र संदेहलेशः ।

महाकविबिल्हणविरचितविक्रमांकदेवचरितं महाकाव्यंसंस्कृतसाहित्यस्यैतिहासिक-काव्येषु परिगण्यते । इदं महाकाव्यं जैसलमेरस्थितपुस्तकालये 'गडऽवहो' ग्रन्थेन सह अमिलत् । ग्रन्थस्यास्य प्राप्तकर्त्ता डॉ. ब्यूह्लर आसीत् ।

स्वकविताविषये कवेः गर्वोक्तिः वर्तते यत् तस्य कवितायाः रसपानं रसध्वनिवक्रोक्तिमर्मज्ञाः विद्वांस एव विधातुं समर्थाः—

रसध्वनेरध्वनि ये चरन्ति
संक्रान्त-वक्रोक्ति-रहस्यमुद्राः ।
तेऽस्मत्प्रबन्धानवधारयन्तु
कुर्वन्तु शेषाः शुकवाक्यपाठम् ॥

कवीनामप्रतिममहिमां वर्णयन् कविबिल्हणः नृपान् सम्बोधयति—

हे राजानस्त्यजत सुकविप्रेमबन्धे विरोधं
शुद्धा कीर्तिःस्फुरति भवतां नूनमेतत् प्रसादात् ।
तु'ष्टैर्नीतं तदलघुरघुस्वामिनः सच्चरित्रं
रुष्टैर्नीतस्त्रिभुवनविजयी हास्यमार्गं दशास्यः ॥

साहित्यस्य पाथोनिधित्वं प्रतिपादयता कविना तस्य रक्षणाय संकेतितम्—

साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः ।
तदस्य दैत्या इव लुण्ठनाय काव्याऽर्थचौराः प्रगुणीभवन्ति ॥

किन्तु काव्यार्थज्ञानशून्यैरपहृतोऽपि काव्यरसो नैव क्षयतां गच्छति तस्य पाथोनिधिमन्थनोत्थात्-इति प्रसंगे कथितं तेनैव—

गृह्णन्तु सर्वे यदि वा यथेष्टं नाऽस्ति क्षतिः काऽपिकवीश्वराणाम् ।
रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एवसिन्धुः ॥

इति वर्णनेन कवेरस्य वैशिष्ट्यं लोकव्यवहारज्ञत्वञ्च नूनं परिज्ञायते, यस्य कृतिपठित्वास्वाध्यायिनोजनाः आत्मानं धन्यमन्वानाः सन्तो जीवन यापयन्ति । इत्यलम् ।

## 37

## बाणोच्छिष्टं जगत्सर्वम् ।

अथवा

## कादम्बरी रसज्ञानामाहारोऽपि न रोचते । (1986)

अखिलेऽपि गीर्वाणीवाङ्मये कविकुलकुमुदकलाधरः कालिदासो यथा कल्पना-वैचित्र्येण रचनाचातुर्येण च पद्यबन्धसौष्ठवे गरिष्ठो वरिष्ठश्च, तथैव गद्यनिबन्धने कविमूर्धन्यः बाणोऽतिशेतेऽन्यान् सर्वानप्यभिरूपान् । पद्यरचनायां केषुचिदेव पद्येषूक्तिवैचित्र्येण भावगाम्भीर्येण कृतिकौशलेन चापूर्वा छटा संजायतेऽखिलेऽपि काव्ये । गद्यकाव्ये तु भूयान् श्रमोऽपेक्ष्यते । पदे पदे वाग्वैचित्र्यमर्थगाम्भीर्यं भाववैभवं कल्पनाकाम्यत्वं च दुर्निवारम् । अतः साधूच्यते—'गद्यं कवीनां निकषं वदन्ति' । यद्यपि गद्यकाव्यबन्धे दण्डी सुबन्धुश्चेति द्वावेवैतौ बाणेन समं सनामग्राहमुल्लेख्यौ, परं बाणो गरिष्ठो वरिष्ठश्चैतेषां भूयिष्ठया भावाभिव्यक्त्या साधिष्ठया शैल्या साधुतया प्रेष्ठया पद-परिष्कृत्या च । अतः सोड्ढलेन 'बाणः कवीनामिह चक्रवर्ती' इत्युक्तम् । धर्मदासेन तरुणीलावण्यमस्य कृतौ दृश्यते—

रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
सा किं तरुणी ? नहि नहि वाणी बाणस्य मधुरस्य ॥

जयदेवो बाणं पञ्चबाणेन कामेनोपमिमीते—

हृदयवसतिः पञ्चबाणस्तु बाणः ।

श्रीचन्द्रदेवाऽमुं कविकुञ्जरगण्डभेदकं सिंहं गणयति—

'आः सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरी-संचारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः ।'

बाणस्य जनिकालविषये वंशादिविषये च न काचन विप्रतिपत्तिः । हर्षचरितस्यादौ तेन वंशादिविवरणं महता विस्तारेणोपस्थाप्यते । जनकोऽस्य चित्रभानुर्जननी राजदेवी च । सम्राजो हर्षस्य समकालीनत्वात् जनिकालोऽस्येसवीयसप्तमशताब्द्याः पूर्वार्धोऽङ्गीक्रियते । हर्षचरितं कादम्बरी चेति ग्रन्थद्वयमस्य प्रधानतः कृतित्वेनाङ्गीक्रियते । कृतयोऽन्या विवादविषया एव विदुषाम् ।

बाणस्य वस्तुविवृतौ वर्णने चापूर्वं वैशारद्यं वीक्ष्य मन्त्रमुग्धत्वमनुभवन्ति मनीषिणः। वर्ण्यस्य वस्तुनोऽणुतमामपि विवृतिं न विजहाति, न किञ्चिदुज्झति परस्मै यत्नेन शक्यं वर्णयितुम्। वर्णनानां व्यापित्वात् सर्वाङ्गीणत्वात् सूक्ष्मतमविवरण-समन्वितत्वाच्च 'बाणोच्छिष्टं जगत्सर्वम्' इति भूयो भूयो व्यादिश्यते। एतदेवात्र समासतः समुपस्थाप्यते।

हर्षचरिते कवेर्वर्णनचातुरी बहुशोऽवलोक्यते। तेषु मुख्यतः उल्लेख्याः प्रसङ्गा सन्ति—मुमूर्षोर्नृपस्य प्रभाकरस्य वर्णनम्, वैधव्यव्यदुखपरिहाराय सतीत्वमाश्रयन्त्या यशोवत्या वर्णनम्, सिंहनादस्योपदेशः, दिवाकरमित्रस्य राज्यश्रीमान्त्वनम्। कवेर्गरिमा कमनीयां कादम्बरीमेवाश्रित्याऽवतिष्ठते इत्यत्र नास्ति विप्रतिपत्तिर्विदुषाम्। यत्र तत्र साङ्गोपाङ्गं वर्णनं महता श्रमेण बाणेनोपस्थाप्यते, तेऽत्र प्रसङ्गा नामग्राहं दिङ्मात्रं प्रस्तूयते। तद्यथा—शूद्रकवर्णनम्, चाण्डालकन्यावर्णनम्, तन्व्याटवीवर्णनम्, पम्पासरो-वर्णनम्, प्रभातवर्णनम्, शबरसेनापतिवर्णनम्, हारीतवर्णनम्, जाबाल्याश्रमवर्णनम्, जाबालिवर्णनम्, सन्ध्यावर्णनम्, उज्जयिनीवर्णनम्, तारापीडवर्णनम्, इन्द्रायुधवर्णनम्, राजभवनवर्णनम्, अच्छोदसरोवर्णनम्, सिद्धायतनवर्णनम्, महाश्वेतावर्णनम्, कादम्बरी-वर्णनञ्च।

समासत कानिचिदुदाहरणान्यत्र प्रस्तूयन्ते। सन्ध्यावर्णनं यथा—

"अनेन च समयेन परिणतो दिवस स्नानोत्थितेन मुनिजनेनार्घविधिमुप-पादयता य क्षितितले दत्तस्तमम्बरतलगत साक्षादिव रक्तचन्दनाङ्गरागं रविरुदवहत्। ..........उद्यत्सप्तर्षिसार्थस्पर्शपरिजिहीर्षयेव संहृतपाद पारावतचरणपाटलरागो रविरम्बरतलादम्बत्।"

प्रभातवर्णनं यथा—

"एकदा तु प्रभातसन्ध्यारागलोहिते गगनतलकमलिनीमधुररक्तसंपुटे वृद्धहंस इव मन्दाकिनीपुलिनादपरजलनिधितटमवतरति चन्द्रमसि,..........सन्ध्यामुपासितु-मुत्तराशावलम्बिनी, मानससरस्तीरमिवाव-रति सप्तर्षिमण्डले,..........इतस्ततः संचरत्सु वनचरेषु, विजृम्भमाणे श्रोत्रहारिणी पम्पासर कलहंसकोलाहले,.......... क्रमेण च गगनतलमार्गमवतरतो दिवसकरवारणस्यावचूल चामरकलाप इवोपलक्ष्यमाणे मञ्जिष्ठारागलोहिते किरणजाले, शनैः शनैरुदिते भगवति सवितरि०।"

कादम्बरीवर्णनं यथा—

"पृथिवीमिव समुत्सारितमहाकुलभूभृद्व्यतिकरां शेषभोगेषु निषण्णाम्, गौरीमिव श्वेतांशुकरचित्तोत्तमाङ्गाभरणाम्, इन्दुमूर्तिमिवोद्दाममन्मथविलासगृहीतगुरु-कलत्राम्, आकाशकमलिनीमिव स्वच्छाम्बरदृश्यमानमृणालकोमलोरूमूलाम्, कल्पतरु-लतामिव कामफलप्रदाम्,..........कादम्बरीं ददर्श।"

अच्छोदसरोवर्णनं यथा—

"प्रविश्य च तस्य तरुखण्डस्य मध्यभागे मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, स्फटिकभूमिगृहमिव वसुन्धरादेव्याः, निर्गमनमार्गमिव सागराणाम्, निस्यन्दमिव

दिशाम्, अंशावतारमिव गगनतलस्य, कैलासमिव द्रवतामापन्नम्, तुषारगिरिमिव, विलीनम्. चन्द्रातपमिव रसतामुपेतम्, हराट्टहासमिव जलीभूतम्,.......... मदनध्वजमिव मकराधिष्ठितम्,..........मलयमिव चन्दनशिशिरवनम्..........अतिमनोहरं, आह्लादनं दृष्टेः, अच्छोदं नाम सरो दृष्टवान् ।"

जाबालिवर्णनं यथा—

"स्थैर्येणाचलानां गाम्भीर्येण सागराणां तेजसा सवितुः प्रशमेन तुषाररश्मेर्निर्मलतयाऽम्बरतलस्य संविभागमिव कुर्वाणम्..........शरत्कालमिव क्षीणवर्षम्, शन्तनुमिव प्रियसत्यव्रतम्,..........वडवानलमिव सततपयोभक्षम्, शून्यनगरमिव दीनानाथविपन्नशरणम्, पशुपतिमिव भस्मपाण्डुरोमश्लिष्टशरीरं भगवन्तं जाबालिमपश्यम् ।"

पाञ्चाली रीतिर्बाणस्य । "शब्दार्थयोः समोगुम्फः पाञ्चालि रीतिरिष्यते" इति बाणोक्तौ शब्दार्थयोर्मञ्जुलः समन्वयः समीक्ष्यते । विषयानुरूपमेव तस्यशब्दावल्यपि विलोक्यते । यथा विन्ध्याटवीवर्णने ओजःसमासभूयस्त्वम् । "उन्मादमातङ्गकपोलस्थलगलितसलिलसिक्तेनेवानवरतमेलावनेन मदगन्धिनान्धकारिता प्रेताधिपनगरीव सदासन्निहितमृत्युभीषणा महिषाधिष्ठिता च, कात्यायनीव प्रचलितखड्गभीषणा रक्तचन्दनालङ्कृता च ।"

वसन्तवर्णने च माधुर्यमिश्रितत्वम् । यथा—"कोमलमलयमारुतावतारतरङ्गितानङ्गध्वजांशुकेषु, मधुकरकुलकलङ्ककालीकृतकालेयककुसुमकुड्मलेषु मधुमासदिवसेषु ।"

बाणस्य वर्णनानि वनितामिव विभूषणानि विभूषयन्त्यलंकरणैरलंकाराः । उपमारूपकोत्प्रेक्षाश्लेषविरोधाभासपरिसङ्ख्यैकावल्यादयोऽलंकाराः पदे पदे प्राप्यन्ते तत्तत्प्रसङ्गेषु । परिसंख्या यथा शूद्रकवर्णने—

"यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसंकरा, रतेषु केशग्रहाः, काव्येषु दृढ़बन्धाः, शास्त्रेषु चिन्ता ।"

विरोधाभासो यथा शूद्रकवर्णने—

"आयतलोचनमपि सूक्ष्मदर्शनम्, महादोषमपि सकलगुणाधिष्ठानम्, कुपतिमपि कलत्रवल्लभम्, अत्यन्तशुद्धस्वभावमपि कृष्णचरितम् ।"

विन्ध्याटवीवर्णने उपमा यथा—

"चन्द्रमूर्तिरिव सततमृक्षसार्थानुगता हरिणाध्यासिता च जानकीव प्रसूलकुशलवा निशाचरपरिगृहीता च ।"

उत्प्रेक्षा यथा सन्ध्यावर्णने—

"अपरसागराम्भसि पतिते दिनकरे पतनवेगोत्थितमम्भः सीकरनिकरमिव तारागणम्बरमधारयत् ।"

श्लेषो यथा राजभवनवर्णने—

"उत्कृष्टकविगद्यमिव विविधवर्णश्रेणि प्रतिपाद्यमानाभिनवार्थसंचयम्, नाटकमिव पताकांकशोभितम्, पुराणमिव विभागास्थापितसकलभुवनकोशम्, व्याकरणमिव प्रथममध्यमोत्तमपुरुषविभक्तिस्थितानेकादशकारकाख्यातसम्प्रदानक्रियाव्ययप्रपञ्चसुस्थितम् ।"

एकावली यथा महाश्वेताजन्मवर्णने—

"क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन नवयौवनेन पदम् ।"

परिसंख्या यथा जाबाल्याश्रमवर्णने—

"यत्र च मलिनता हविर्धूमेषु न चरितेषु, मुखरागः शुकेषु न कोपेषु तीव्रता कुशाग्रेषु न स्वभावेषु, चञ्चलता कदलीदलेषु न मनःसु, चक्षुरागः कोकिलेषु न परकलत्रेषु,..........मेखलाबन्धो व्रतेषु नेर्ष्याकलहेषु,..........रामानुरागो रामायणेन न यौवनेन, मुखभङ्गविकारो जरया न धनाभिमानेन ।" यत्र च महाभारते शकुनिवधः, पुराणे वायुप्रलपितं..........शिखण्डिनां नृत्यपक्षपातो, भुजङ्गमानां भोगः कपीनां श्रीफलाभिलाषः मूलानामधोगतिः ।

बाणः श्लिष्टसमस्तदीर्घवाक्यप्रयोगमनु प्रयुक्ते लघुपदन्यासां वाक्यावलीम् । स यथैव दक्षो दीर्घवाक्यरचनायां तथैव पटुर्लघुवाक्यप्रयोगेऽपि यत्र भावगाम्भीर्यमर्थगौरवं च तत्र सरला लघुपदा वाक्यावली, इतरत्र च श्लिष्टा समस्ता दीर्घा च । यथा शुकनासोपदेशेऽर्थगौरवात् लघुपदप्रयोगैः—

"मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः, न पूजयन्ति द्विजातीन्, न मानयन्ति मान्यान्, नार्चयन्त्यर्चनीयान्, नाभ्युत्तिष्ठन्ति गुरून् ।"

महाश्वेताविलापे, कपिञ्जलकृताक्रन्दने च सन्ति लघूनि वाक्यानि । तद्यथा—

"कपिञ्जलकृतं रोदनम्—हा हतोऽस्मि, हा दग्धोऽस्मि, हा वञ्चितोऽस्मि, हा किमिदमापतितम्, किं वृत्तम्, उत्सन्नोऽस्मि,..........हा धर्म निष्परिग्रहोऽसि, हा तपो निराश्रयोऽसि, हा सरस्वती विधवासि, हा सत्यम् अनाथमपि, हा सुरलोक शून्योऽसि..........।"

जाबालिवर्णने लघुपदविन्यासो यथा—

"प्रवाहः करुणारसस्य, संतरणसेतुः संसारसिन्धोः, आधारः क्षमाम्भसाम्, सागरः सन्तोषामृतस्य, उपदेष्टा सिद्धिमार्गस्य,..........सखा सत्यस्य, क्षेत्रम् आर्जवस्य प्रभवः पुण्यसंचयस्य ।"

उज्जयिनीवर्णने, राजभवनवर्णने, शुकनासोपदेशे, पुण्डरीकाय, कपिञ्जलोपदेशे च संलक्ष्यते बाणस्यापूर्वा वर्णनचातुरी । स तथा प्रस्तवीति प्रत्येकं वस्तु यथा चित्रपटे स्वतः सन्दृश्यमाना काचित् कथा घटना वोपतिष्ठति । एवं ज्ञायते यत् तस्य वर्णनचातुरी सर्वातिशायिनी । कवीनामन्येषां वर्णनं च बाणोच्छिष्टमेव ।

## 38

## गद्यं कवीनां निष्कषं वदन्ति।

अथवा

## अम्बिकादत्त व्यासीया व्याख्या राष्ट्रस्य नूतना। (1985)

अथवा

## राजस्थानीयाः आधुनिकाः कथालेखकाः। (1986)

अस्मिन् जगति को न वेत्ति यत् नानायोनिषु भ्रमता जीवेन अतिकाठिन्येनेयं मानवीतनुरासाद्यते। मानवीं तनुमपि प्राप्य विद्याप्राप्ति न सरला। सा तु महता प्रारब्धेन उपार्जिता क्रियते। विद्याप्राप्तो सत्यामपि कवित्वनिर्माण शक्तेरधिगमनमति दुष्करम्। काव्येऽपि पद्यकाव्यं न तथा दुष्करं यथा गद्यरचना। अतएव प्राचीनैः संस्कृतस्याऽऽचार्यैरेषा सूक्तिः प्रसारिता यत्—

"गद्यं कवीनां निकषं वदन्ति।"

संस्कृत पद्यवत् गद्यस्य प्रयोगोऽपि वैदिककालादेव भवति। कृष्णयजुर्वेदः ब्राह्मणग्रन्था, उपनिषदश्च अधिकांशत गद्ये एव वर्तन्ते। यद्यपि संस्कृतसाहित्ये गद्ये ग्रथितानां ग्रन्थानां संख्या अंगुलिनिर्देश्या एव वर्तते। तथापि पद्यस्यापेक्षया गद्यस्य महत्त्वं प्रतिपादयितुमेव संस्कृतस्य प्राचीनैराचार्यैरेषा सूक्तिः प्रसारिता। गद्यस्य महत्त्वं एतस्मात् कारणादेव वर्तते यत् गद्यकाव्यरचनाति कठिनाऽस्ति। इदमनिश्चतमेव यत् कदा केन प्रकारेण च संस्कृतगद्यस्य प्रभव अभूत्। लौकिक गद्यस्य दर्शनं सर्वप्रथमं महाभारते एव विद्यते। गद्ये एव 'अर्थशास्त्रम्' तथा महाभाष्यादयः ग्रन्थाः उपलभ्यन्ते। पुराणां गद्यं साधारणकोटिकं वर्तते। साहित्यशास्त्रकर्तृणां दार्शनिकानां च गद्यं पारिभाषिकमत्यन्त कठिनञ्चास्ति। चम्पूकाव्यमपि गद्यकाव्ये एव परिगण्यते।

संस्कृतगद्यकाव्यस्य विशेषता ओजस्समासबहुलता चास्ति। उक्तं हि दण्डिना—

"ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम्।"

काव्यस्यातिदीर्घान् समासान् दुर्बोधान् घटनासंकेतान्, श्लेषयमकानुप्रासोपमोत्प्रेक्षापरिसंख्यादीन् अलंकारान् प्रयोक्तुं अत्र पूर्णा स्वतन्त्रता वर्तते। प्रकृतेः सूक्ष्मचित्रणस्य पुरुषस्त्रीणां नैतिकमानसिकशारीरिकगुणानां च वर्णनस्य प्राधान्यमेव अत्र वर्तते। गद्यकाव्यं भेदद्वये प्राचीनैरालंकारिकै विभक्तम्—आख्यायिका, कथा च।

प्राचीनकाले गद्यकाव्यस्य परिमितसंख्यायाः किं कारणमस्ति इत्येषः प्रश्नः। इदं सत्यं यत् संस्कृते गद्यकाव्यस्य संख्या परिमिता एवास्ति, तथापि अनेक गद्यकाव्यानामुल्लेखो साहित्ये अस्ति। पद्ये मादकतापूर्ण श्रुतिमाधुर्यगुणः वर्तते, परं गद्ये

ईदृग्विधस्य गुणस्य नोपलब्धिः । सार्धमेव समासबाहुल्येन गद्यकाव्यमधिगन्तुमतिदुष्कर-मासीत् एतस्माद् कारणादेव गद्यरचनायां कवीनां प्रवृत्ति बहुलानासीत् ।

संस्कृतगद्यकाव्ये कवित्रयं प्रमुखमस्ति, बाणभट्ट, सुबन्धुः, दण्डी च । एतेषां काव्येषु गद्यस्य चरमोत्कर्षः प्राप्यते । एतासु रचनासु एव सर्वप्रथमं वास्तविकस्य गद्यस्य दर्शनं भवति ।

गद्यकाव्येषु प्राचीनतमं पुस्तकं सुबन्धुकृतं 'वासवदत्ता' अस्ति । अस्मिन् काव्ये वासवदत्ताकन्दर्पकेतयोः प्रणयकथा चित्रिता । श्लेषप्राधान्यमत्र वर्तते एतत्कृते गौरव-मनुभवति कविः—

"प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिः ।"

अस्मिन् काव्ये भावानामपेक्षया वर्णनस्य प्राधान्यं वर्तते । शब्दचमत्कारेण काव्यं रसहीनं कृतम् । अस्य काव्य गौडी रीतिः । एषा शैली एव गद्य काव्यस्य मान्याऽसीत् प्राचीनकाले । तदुक्तं हि—

"ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम् ।"

गद्यसाहित्ये दण्डिना द्वितीयं पदं प्राप्तम । दशकुमारचरिते दण्डिना एका नवीना शैली प्रयुक्ता । स वैदर्भीरीतेः कविः अस्ति । अस्य पदावली सरसा, कोमला मधुरा मनोभावाभिव्यञ्जिका चास्ति । पर्याप्ता रोचकता अस्ति, किन्तु काव्ये अश्लीलत्वमपि दृश्यते । कथायाः क्रमः अति दर्शनोयः । अस्मिन् काव्ये दशकुमारैः स्वपर्यटनानां विचित्रानुभवानां पराक्रमाणाञ्च मनोरंजकं वर्णन कृतम् । दण्डिनः पदलालित्यस्यातिप्रशंसा क्रियते । उक्तं हि—

"दण्डिनः पदलालित्यं...........।"

एष मनोरम पदविन्यासः दर्शनीयः अस्ति—'अयुग्मशरः शरशयने शाययिष्यति ।' एकेन भारतीयालोचकेन दण्डी एव एकमात्रं कविः—

"कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः ।"

संस्कृतगद्यकविमण्डले महाकविर्बाणः सर्वमूर्धाभिषिक्तः, महामेधावी, वश्य-वाचामग्रणीश्चासीत् । सर्वलोकप्रथितासु 'बाणोच्छिष्टं जगत्सर्वम्' इत्याद्युक्तिषु बाणप्रशंसा परां कोटिमवजगाहे । बाणः सर्वस्य जगतः सूक्ष्मातिसूक्ष्मं निरीक्षणं कृत्वा स्थाने स्थाने च तस्य वर्णनमकरोत् । एतस्मादेव तदुत्तरवर्तिनां कवीनां काव्यानि बाणोच्छिष्टान्येव वर्तन्ते । बाणभट्टस्य काव्यद्वयमस्ति, 'कादम्बरी', 'हर्षचरितञ्च । कादम्बर्यां बाणेन याद्भुता प्रतिभाद्युतिः प्रदर्शिता सा पराकाष्ठां प्राप्ता । उक्तं हि भूषणभट्टेन समुचितमेव—

"कादम्बरीरसभरेण समस्त एव ।
मत्तो न किञ्चिदपि चेतयते जनोऽयम् ।।"

बाणस्य वर्णनशैली अतिदर्शनीया । बाणस्यप्रकृतिचित्रणं विविधालंकृत्यानु-प्राणितं तस्य सूक्ष्मनिरीक्षणशक्तिमत्वं च प्रमाणयति—

"क्वापि विहृत्य दिवसावसाने लोहिततारका तपोवनधेनुरिव कपिला परिवर्तमाना सन्ध्या तपोधनैरदृश्यत ।"

बाणस्य अलौकिकं काव्यकलाकौशलं, अपूर्ववर्णनाशक्तिम्, अनुपमं वाग्विलासं विलोक्य निश्चितमेव एतत् कथयितुं शक्यते यत् स गद्यकविषु सर्वश्रेष्ठः प्रतीयते । बाणस्य शैल्यां विचित्रसूक्ष्मनिरीक्षणशक्तिः प्रकृष्टं प्रकृतिप्रेम अजस्रशब्दराशिः । एते गुणाः सर्वत्र समानरूपेण उपलभ्यन्ते । बाणेन वर्णनस्थलेषु विभिन्नानां शैलीनां प्रयोगः कृतः । भावप्रधानविषये अथवा मार्मिकस्थले तस्य शैली सशक्ता प्रभावोत्पादिका च ।

गद्यकाव्यस्य एवंविधं सौन्दर्यं प्रभावञ्च विलोक्य को नाम न कथयिष्यति यत् गद्यकाव्यं पद्यकाव्यात् अधिकं महत्वपूर्णं प्रभावोत्पादकं चास्ति । गद्ये एव कवयः पूर्णां स्वतन्त्रतां प्राप्य स्वमनोगतभावान् मनोरागान् विचित्रानुभावान् च प्रकटीकुर्वन्ति । गद्यकाव्यरचनातिदुष्करा वर्तते अत एव अस्माभिः इदं कथयितुं शक्यते यत् 'गद्यं कवीनां निकषं वदन्ति' एषा सूक्तिः पूर्णरूपेण संगच्छते ।

————

# विषय-प्रवेश

## संस्कृत भाषा तथा व्याकरण

व्याकरणमूलत्वात् सर्वविद्यानामिति आनन्दवर्धनाचार्य के अनुसार संस्कृत भाषा के अध्ययन के लिए व्याकरणशास्त्र का परिज्ञान नितान्त अपेक्षित है। अन्य भाषाओं की अपेक्षा संस्कृत भाषा में व्याकरण को विशेष महत्त्व दिया गया है। इसी कारण संस्कृत में विविध पद्धतियों में व्याकरण ग्रन्थों का प्रणयन किया गया है, तैत्तिरीयसंहिता के अनुसार संस्कृत भाषा का सर्वप्रथम व्याकरण ऐन्द्र था। इसके अतिरिक्त पाणिनि से पूर्व काशकृत्स्न, आपिशलि आदि आठ शाब्दिक हो गए हैं। पाणिनि की अष्टाध्यायी में इन आठों का उल्लेख इनके सम्मानार्थ किया गया है, यथा—लोपःशाकल्यस्य, त्रिप्रभृतिषु शाकटायनस्य आदि। पाणिनि व्याकरण के उदय होने पर ये सब पूर्ववर्ती व्याकरण या तो कालग्रास हो गए, अथवा वास्तविकता यह हो सकती है कि विज्ञानपूर्ण पाणिनि व्याकरण के समक्ष वे सब हतप्रभ हो गए हों। अतः यह निर्विवाद सत्य है कि भगवान् पाणिनि का व्याकरण न केवल भारतवर्ष में अपितु समस्त विश्व में बेजोड़ है।

## व्याकरणस्य त्रिमुनि : पाणिनि

पाणिनि यद्यपि बचपन में सर्वथा जड़बुद्धि थे, इनकी जड़बुद्धि से नितान्त खिन्न गुरु ने इन्हें सार्द्धचन्द्र देकर निष्कासित भी कर दिया था। इस प्रकार गुरु से अपमानित होकर पाणिनि ने आशुतोष भगवान् शिव से चतुर्दश निर्देशक तत्त्व प्राप्त किए। उसी चतुर्दशनिर्देशिका के आधार पर समस्त व्याकरण पल्लवित हुआ। पाणिनि का अष्टाध्यायी संसार में अनुपम ग्रन्थ है। पाणिनि सूत्रकार के नाम से सर्वत्र व्यवहृत हुए हैं।

### कात्यायन

पाणिनि के पश्चात् कात्यायन का नाम व्याकरण में विशिष्ट स्थान रखता है। कात्यायन ने पाणिनि के दुरुक्त, अनुक्त एवं द्विरुक्त पर विचार कर वार्तिक प्रणयन से व्याकरण को विशेष प्रस्फुटित करने का प्रयास किया है। जैसा कि कहा है—महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्येति।

### पतञ्जलि

भगवान् पतञ्जलि शेषावतार माने जाते हैं। इन्होंने पाणिनि-सूत्रों का विशिष्ट समाधान किया जो महाभाष्य के नाम से भी प्रसिद्ध है। अजाभक्षित होने से अष्टाध्यायी के समस्त सूत्रों का महाभाष्य उपलब्ध नहीं है। व्याकरणशास्त्र में इनका दिशा निर्देश सर्वथा सर्वोपरि एवं प्रामाणिक माना गया है। इनकी महाभाष्य कृति विश्व में अनुपम है।

## भट्टोजिदीक्षित

महावैयाकरण दीक्षित ने पाणिनि व्याकरण सूत्रों के आधार पर अर्थ ज्ञान सम्भव न होने से सरलातिसरल भाषा में तीन हजार नौ सौ पिचेत्तर सूत्रों में अस्पष्टार्थ प्रतिपादक-सूत्रों की वृत्ति लिखी, जिसे सूत्रवृत्ति कहा जाता है। दीक्षित ने अपनी वैयाकरण सिद्धान्त कौमुदी नामक कृति के द्वारा व्याकरण को सुगम बनाया है। माला के समान प्रक्रियोपयोगी सूत्रों का चयन करके साधुत्व सम्पादन करना सर्वथा स्तुत्य प्रयास है। आज यत्र-तत्र जो व्याकरणाध्ययन के प्रसार में एकमात्र हेतु है, वह दीक्षित कृति सिद्धान्त कौमुदी ही है।

## वरदाराजाचार्य

भट्टोजिदीक्षित के पश्चात् द्वितीय महत्त्वपूर्ण नाम उन्हीं के शिष्य वरदराज का है। मध्यसिद्धान्त कौमुदी जो वरदराज की ही कृति है, उसके मंगलाचरण श्लोक में वरदराज ने अपने गुरु की वन्दना की है—

नत्वा वरदराजः श्रीगुरुन् भट्टोजिदीक्षितान् ।
करोति पाणिनीयानां मध्यसिद्धान्त कौमुदीम् ।।

इस प्रकार वरदराज का स्थितिकाल सत्रहवीं शताब्दी का पूर्वार्द्ध रहा होगा। इनके पिता का नाम दुर्गातनय था, जैसा कि सारसिद्धान्त कौमुदी से प्रकट होता है—

कृता वरदभट्ट श्रीदुर्गातनयसूनुना ।
वेदवेदप्रवेशाय सारसिद्धान्तकौमुदी ।।

इनके द्वारा रचित चार ग्रन्थ मिलते हैं—लघुसिद्धान्त कौमुदी जिसे लघु-कौमुदी भी कहते हैं, मध्यसिद्धान्त कौमुदी तथा सारसिद्धान्त कौमुदी जो भट्टोजि-दीक्षित रचित सिद्धान्त कौमुदी के ही संक्षिप्त संस्करण हैं। लघुसिद्धान्त कौमुदी का प्रणयन संस्कृत-व्याकरण के प्रारम्भिक पाठकों के लिए किया गया है—

नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम् ।
पाणिनीयप्रवेशाय लघुसिद्धान्त कौमुदीम् ।।

## लघुसिद्धान्त कौमुदी की विशेषता

लघु कौमुदी में अनावश्यक विस्तार नहीं किया गया है। इसमें केवल उपादेय सूत्रों को ही लिया गया है जिनमें केवल लौकिक तथा व्यावहारिक प्रयोगों के सम्पादनार्थ लौकिक नियमों को ही ग्रहण किया गया है। मध्यसिद्धान्त कौमुदी या सिद्धान्त कौमुदी इससे अति विस्तृत है, उसमें न केवल लौकिक व्याकरण नियमों का संकलन ही है अपितु लौकिक एवं वैदिक शब्दों का विवेचन भी व्यापक रूप से किया गया है। यथा—

'इत्थं लौकिक शब्दानांङ्मात्रंहि दर्शितम्' कहकर लौकिक नियमों के अतिरिक्त स्वरवैदिक प्रक्रिया का निर्माण कर वैदिक शब्द साधुत्व विवेचन का भी विस्तार से उल्लेख किया गया है। यद्यपि वरदराज के चार ग्रन्थ हैं, तथापि इन

चारों में लघुसिद्धान्त कौमुदी का प्रचार इसलिए अधिक हुआ कि यह एक समुपादेय प्रारम्भिक ग्रन्थ है। आज भी लघुकौमुदी को व्याकरण का सर्वोत्तम प्रारम्भिक ग्रन्थ माना जाता है। आधुनिक विद्वानों ने आजकल अनेक इस प्रकार के ग्रन्थों का प्रणयन करने की चेष्टा की है, किन्तु जो विशेषता या उपादेयता लघु-कौमुदी की है, वैसी इदानींतन वैयाकरणों द्वारा रचित कौमुदियों की नहीं है।

यद्यपि वरदराज ने व्याकरण क्षेत्र में किसी मौलिक ग्रन्थ की रचना नहीं की, तथापि लघुसिद्धान्त कौमुदी द्वारा पाणिनीय व्याकरण को लोकप्रिय बनाने में इनका मूर्धन्य स्थान था। आज इस ग्रन्थ का सभी विश्वविद्यालयों के संस्कृत पाठ्यक्रम में सन्निवेश है। इस प्रकार यह व्याकरणशास्त्र का प्रारम्भिक अनुपम ग्रन्थ होने से यह निर्विवाद सत्य है कि लघुकौमुदी का महत्त्व वास्तव में शीर्षस्थ है तथा अनादिकाल से इसका प्रचलित अध्ययन ही इसकी लोकप्रियता का एकमात्र प्रमाण है। इसके सम्यक् अध्ययन से व्याकरण का सार-भूत विवेक अवश्य होता है, इसमें किसी प्रकार का कोई सन्देह न होने से कौमुदी की अपने आप में एक विशिष्ट विशेषता है जिसको विद्वान् सम्यक् पहिचानते हैं।

## इस पुस्तक की विशेषता

राजस्थान विश्वविद्यालय द्वारा निर्धारित एम. ए. उत्तरार्द्ध के पाठ्यक्रम को ध्यान में रखते हुए इस पुस्तक का निर्माण किया गया है, जिसमें—

(1) कारक प्रकरण—सिद्धान्त कौमुदीस्थ।

(2) कृदन्त, स्त्रीप्रत्यय, समास—वरदराजाचार्यकृत लघुकौमुदीस्थ।

(3) अपठित गद्यावतरण तथा पद्य-खण्ड।

(4) अशुद्धि संशोधन वाक्य।

(5) परिशिष्ट—कतिपय द्रष्टव्य उपयोगी प्रश्न एवं संशोधित वाक्यों सहित।

कारक प्रकरण में सूत्रों की सरलातिसरल सुबोध व्याख्या के अतिरिक्त द्रष्टव्य प्रयोगों का चयन कर उन्हें सिद्ध किया गया है। यत्र-तत्र जो कारक प्रकरण में वैशिष्ट्य परिलक्षित होता है, यथा—गंगायां घोषः, रुच्यर्थक होने पर भी अभिलषति के योग में चतुर्थी क्यों नहीं होती, सतीसप्तमी की विशेषता आदि विषय जात का प्रश्न बना कर समाधान किया गया है। इसी प्रकार समासों में आन्महतः सूत्र से विधीयमान आत्व—'महती सेवा' इस विग्रह में हो सकता है। यदि महतां सेवा यह षष्ठ्यन्त विग्रह होने पर समानाधिकरण के अभाव में आत्व नहीं होता, क्योंकि एकार्थ प्रदियादत्व तथा वैकविभक्तित्वरूप (अर्थात् एक अर्थ को कहते हों एवं दोनों समान विभक्तिक हों) का समानाधिकरण नहीं है।

इसी प्रकार कृदन्त में भी विशिष्ट सूत्रों की व्याख्या, विशिष्ट प्रश्न, जैसे—'सुप्यजातौ विनिताच्छिल्ये' सूत्र उष्णं कदाचित् भुंक्ते में णिनि करता, यहाँ वाक्यमात्र का ही प्रयोग किया जाना अपेक्षित है।

इसी प्रकार स्त्री प्रत्यय में टाप्, ङीप्, ङीष्, ङीन्, ति, ऊङ्, इन प्रत्ययों का विवेचन सोदाहरण किया गया है। साथ ही उपादेय सूत्रों का विशेष विवेचन किया गया है, जैसे—पुंयोगादाख्यायाम् में पुंयोग केवल दाम्पत्य मात्र का ही नहीं होता किन्तु जन्यजनक भाव भी गृहीत होता है। अतएव 'कैकेयी कामाःफलिता स्तवेति' इस उदाहरण के द्वारा स्पष्ट किया गया है।

इन सबके अतिरिक्त पुस्तक के अन्त में परिशिष्ट भाग भी संलग्न किया गया है, जिसमें व्युत्पत्ति-संशोधन, सोदाहरण कारक, समास, कृदन्त प्रकरण से सम्भावित प्रश्नों का संकलन छात्रों के लिए विशेषकर उपादेय होगा।

कॉलेज बुक डिपो, त्रिपोलिया बाजार, जयपुर के संचालक सहृदय श्री जैन महोदय की प्रेरणा से छात्रहित में यथाबुद्धि विवेचन किया गया है। आशा है इससे एम. ए. के छात्रों का विशेष हित होगा। इस पुस्तक के प्रणयन तथा पाण्डुलिपि निर्माण में श्री भँवर लाल शर्मा, व्याख्याता राजकीय उच्च माध्यमिक विद्यालय, भानपुरकलाँ का तथा डॉ. श्यामनारायण का पूर्ण सहयोग रहा है, एतदर्थ हम आप दोनों का हृदय से आशीर्वचन करते हैं। साथ ही श्री जैन साहब, कॉलेज बुक डिपो का समभिनन्दन करते हैं।

अन्त में सभी से सानुरोध निवेदन है कि गच्छतः स्खलन न्यास से जो कुछ स्खलन इसमें हुआ हो उसे शुद्ध करने की कृपा करें।

विदुषां वंशवदः

**चण्डीप्रसाद आचार्य**

# अथ कारकप्रकरणम्

## प्रथमाविभक्तिविवेचनम्

---

**प्रश्न 1. प्रातिपदिकार्थ सूत्र की व्याख्या करते हुये निम्नांकित बिन्दुओं का विवेचन कीजिये—**

**(क) प्रातिपदिकार्थ क्या है ?**

**(ख) 'परिमाणमात्र' का सोदाहरण विवेचन कीजिये ।**

1. प्रातिपदिकार्थलिङ्ग परिमाणवचनमात्रे प्रथमा ।।2/3/46।।

नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे, लिङ्गमात्राद्याधिक्ये, परिमाणमात्रे, संख्यामात्रे च प्रथमा स्यात् । उच्चैः, नीचैः, कृष्णः, श्रीः, ज्ञानम् । अलिङ्गा नियतलिङ्गश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम् ।

अनियतलिङ्गास्तु लिङ्गमात्राद्याधिक्यस्य । तटः, तटी, तटम् ।

परिमाणमात्रे-द्रोणो व्रीहिः । द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः । प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम् । प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः । वचनम्-सङ्ख्या । एकः, द्वौ, बहवः । इह उक्तार्थत्वाद् विभक्तेरप्राप्तौ वचनम् ।

**सूत्र-व्याख्या**—जिस अर्थ की नियत (व्यापक) रूप से उपस्थिति (बोध) होती है वह ही नियतोपस्थितिक प्रातिपदिकार्थ कहलाता है । उसी प्रातिपदिकार्थ के उच्चारण करने पर अभिधा, लक्षणा और व्यञ्जना शक्ति से जिस अर्थ की प्रतीति होती है उस (नियतोपस्थितिक प्रातिपदिकार्थमात्र) में प्रथमा विभक्ति होती है । सूत्र में स्थित मात्र शब्द का प्रत्येक के साथ योग है, अतः प्रातिपदिकार्थमात्र के अतिरिक्त लिङ्गमात्र की अधिकता में, परिमाणमात्र की प्रतीति में, एवं केवल संख्या अर्थ के प्रत्यायक शब्दों से प्रथमा विभक्ति होती है ।

अलिङ्ग और नियतलिङ्ग रूप से उभयविध शब्दों में प्रातिपदिकार्थमात्र से प्रथमा विभक्ति होती है। जैसे—अलिङ्ग में अधिकरण शक्ति प्रधान-उच्चत्व, नीचत्व विशिष्ट स्थान अर्थ वाले उच्चैस् और नीचैस् से प्रथमा एकवचन के अव्यय होने से लुक् सकार का रुत्व विसर्ग, प्रत्यय लक्षण से पदत्व उच्चैः बना है । यहाँ

'सपूर्वायाः' से विकल्प आदेश है तथा केवल प्रातिपदिकार्थ का बोध है। इसी प्रकार 'कृष्ण' शब्द नियतलिङ्ग पुंस्त्व विशिष्ट वसुदेव के पुत्र रूप अर्थ का प्रत्यायक है प्रथमा—कृष्ण। भक्तजनों के पापों को दूर करने वाला। नित्य स्त्रीलिङ्ग क्विप् प्रत्ययान्त नीर्घत्व विशिष्ट विष्णुपत्नी रूप अर्थ वाचक से प्रथमा—श्रीः। ज्ञप्ति को ज्ञान कहते हैं, अतः यहाँ भावार्थक ल्युट् प्रत्ययान्त केवल ज्ञान रूपार्थ नित्य नपुंसक से प्रथमा—ज्ञानम्। लिङ्ग विषयक प्रतीति जहाँ नहीं होती है वे अव्यय एवं नियतलिङ्ग वाले शब्द प्रातिपदिकार्थ मात्र के उदाहरण हैं।

अनेक लिङ्गयुक्त यथा 'तट' शब्द है, वैसे शब्दों में प्रातिपदिकार्थ की अपेक्षा लिंग रूप अर्थ की प्रतीति भी है वे लिंगमात्राधिक्य के उदाहरण हैं। जैसे—पुल्लिग में तटः, स्त्रीलिंग में जाति लक्षण ङीषन्त तटी, नपुंसक में सु को अम् पूर्वरूप से 'तटम्' बना।

परिमाण परिच्छेदक मात्रार्थक है सांकेतिरार्थक नहीं है। अतः विस्तः, पुरुषः, घृतम्, काण्डम्, द्रोणः आदि से प्रथमा विभक्ति उत्पन्न हुई है।

परिमाणमात्र के उदाहरण 'द्रोणो व्रीहिः' में द्रोण प्रातिपदिक से परिमाण रूप अर्थबोधिका प्रथमा उत्पन्न है। द्रोण परिमाण विशेष का वाचक है प्रकृत्यर्थ द्रोणरूपार्थ का परिमाण रूप प्रत्ययार्थ में विशेष्य विशेष्य भाव सम्बन्ध (अभेदो वा) से अन्वय है, वह सम्बन्ध अभेदस्वरूप है। प्रकृत में जहाँ 'अभेद' शब्द है वहाँ विशेष्य-विशेषण भाव रूप सम्बन्ध ज्ञान मानसिक करना चाहिये। द्रोणाभिन्नं यत् परिमाणम्= अर्थात् द्रोण स्वरूप परिमाण, इस प्रत्ययार्थ=परिमाण का व्रीहिरूपार्थ में परिच्छेद्य-परिच्छेदक भावरूप सम्बन्ध से अन्वय है। नापने वाले को परिच्छेदक कहते हैं यथा प्रकृत में द्रोण, जो वस्तु नापी जाय उसे परिच्छेद कहते हैं। यथा—व्रीहि=धान। व्रीहिपद से उत्तर प्रथमा प्रातिपदिकार्थ ही है, जातिनिर्देश है, अतः एकवचन है, वस्तुतः—'व्रीहयः' यह निर्देश उचित था अनेक व्रीहियों का परिच्छेद्य है। एक नहीं।

द्रोणपदार्थ प्रत्ययार्थ परिमाण में अभेद सम्बन्ध से विशेषण है, परिमाण रूप अर्थ में विशेष्यता है, एवं विशेषणता भी है। परिच्छेद्य भाव से व्रीहि अर्थ में केवल विशेष्यता है='द्रोणाभिन्नं यत्परिमाणं तत्परिच्छिन्नो व्रीहिः' यह अर्थ सम्पन्न हुआ।

अब यहाँ यह शंका होती है कि प्रातिपदिकार्थ में ही द्रोण से प्रथमा सिद्ध थी पुनः परिमाण में प्रथमा करने के लिये सूत्र में परिमाण ग्रहण क्यों किया? द्रोणार्थ रूप प्रातिपदिकार्थ में 'द्रोण' शब्द से प्रथमा विभक्ति आने पर प्रत्ययार्थ भी नामार्थ ही हुआ, उसका व्रीहिरूप नामार्थ के साथ अभेद सम्बन्ध होकर द्रोण स्वरूप व्रीहि=द्रोणाभिन्न व्रीहि इस अनिष्टार्थ की प्रतीति होगी। यह परस्पर बाधित है तथा परिच्छेद एवं परिच्छेद्य का भेद है अभेद नहीं है, नामार्थ=प्रातिपदिकार्थ का नामार्थ=प्रातिपदिकार्थ के साथ अभेदान्वय ही है—"नामार्थनामार्थयोरभेदान्वयः।"

यदि नामार्थ का नामार्थ में भेद सम्बन्ध से अन्वय करना है तो प्रत्ययार्थ द्वारा ही होता है। अर्थात् नामार्थ का प्रत्ययार्थ में अन्वय एवं प्रत्ययार्थ का नामार्थ में अन्वय एवं इसलिये सूत्र में परिमाण ग्रहण किया है। 'नामार्थनामार्थयोरभेदान्वयः' नियम अस्वीकार करने पर 'राजा पुरुषः' यहाँ राज पदार्थ का स्वत्व सम्बन्ध से पुरुष में अन्वय होने लगेगा एवं 'भूतलं घटः' यहाँ भूतल का आधेयता सम्बन्ध से घट में अन्वय होने लगेगा।

किन्तु यह परिमाणग्रहण पद संस्कार पक्ष में द्रोण से प्रातिपदिकार्थ में प्रथमा कर द्रोणः सिद्ध करने के पश्चात् व्रीहिः का उसके साथ संयोजन करने पर अभेदान्वय प्राप्त है जो वह बाधित (असम्भव) है। अतः यहाँ द्रोणपरिच्छिन्न में लक्षणा करेंगे (अर्थात् द्रोणपरिच्छेदक से नपी हुई वस्तु) द्रोणपरिच्छिन्न का अभेद से व्राहिर्थ में अन्वय करेंगे तो कोई दोष नहीं रहेगा, फिर सूत्र में परिमाण ग्रहण क्यों किया ? इसका समाधान यह है कि 'द्रोण' शब्द अनेकार्थ है, यथा महाभारत में प्रसिद्ध द्रोणाचार्य, एवं दोण=काक का नाम भी है—

के शवं पतितं दृष्टवा द्रोणो हर्षमुपागतः।
रुदन्ति कौरवाः सर्वे हाहा केशव केशव !॥

यहाँ जलस्थित शव को देखकर काक हर्ष से भर गया एवं जलस्थित शव भक्ष्य न होने से सियार रोने लगे। द्रोण परिमाण भी है, अतः नियतोपस्थितिक नहीं है, प्रातिपदिकार्थ में प्रथमा अप्राप्त है अतः सूत्र में परिमाण ग्रहण किया है। इसी प्रकार प्रातिपदिकार्थ सूत्र में प्रवृत्तिनिमित्त (धर्म) एवं तदाश्रय (धर्मी) दोनों प्रातिपदिकार्थ से गृहीत हैं। 'द्रोण' शब्द द्रोणत्व द्रोण को जिस प्रकार बोधन करता है उसी प्रकार वह परिमाणत्व परिमाण का भी बोधन करता है। अतः प्रातिपदिकार्थ से अप्राप्त प्रथमा के विधानार्थ सूत्र में 'परिमाण' शब्द का ग्रहण किया गया है।

सूत्र में स्थित 'वचनम्' का शब्दार्थ संख्या है, तथा एकः, द्वि एवं बहु शब्द से एकत्व, द्वित्व एवं बहुत्व संख्या कही गयी है, अतः जो अर्थ प्रकृति से उक्त हो तदर्थक विभक्ति से यहाँ क्रमशः एकवचन, द्विवचन एवं बहुवचन 'उक्तानाभप्रयोगः' इस न्यास से अप्राप्त रहा। यह न्याय अपूर्व नहीं है किन्तु अनन्यलब्ध अर्थ ही शब्द (या विभक्ति) का वाच्य होता है, अपूर्व अर्थ बोधकता जहाँ न रहे वहाँ अर्थ बोधक प्रत्ययादिकी उत्पत्ति न होना स्वाभाविक ही है। तथापि इस सूत्र में वचन ग्रहण-सामर्थ्य से एकादि से क्रमशः विभक्ति तदर्थवादिका हुई है। सर्वथा अनन्वितार्थक विभक्ति न लाकर प्रकृत्यर्थ में अन्वय योग्य विभक्ति ही उत्पन्न हुई है। यथा एकः, द्वौ, बहवः यहाँ एकत्व, द्वित्व, बहुत्व अर्थों की वाचिका प्रकृतियाँ हैं, विभक्तियाँ, अनुवादिका हैं, विभक्ति का फल सुबन्त होकर पदसंज्ञा आदि हैं। अतः यहाँ नियतोपस्थितिक अर्थ में भिन्न अर्थ का अभाव रहने से प्रातिपदिकार्थ से प्रथमा हुई है।

2. सम्बोधने च ॥ 2/3/47 ॥

इह प्रथमा स्यात् । हे राम !

**सूत्र-व्याख्या**—प्रातिपदिकार्थ की अपेक्षा जहाँ सम्बोधन रूप की अधिक प्रतीति रहे वहाँ सम्बोधन में प्रातिपदिक से प्रथमा विभक्ति होती है, जैसे—हे राम ! यहाँ उत्पन्न विभक्ति का 'एङ् ह्रस्वात्' से लोपे हुआ है। जो सम्मुख नहीं है उसको सन्मुख करने के व्यापार को सम्बोधन कहते हैं—'अनभिमुखक्य अभिमुखीकरणं सम्बोधनम्' यहाँ विभक्ति का अर्थ सम्बोधन रूप उस प्रकृत्यर्थ के प्रति विशेष है एवं क्रिया के प्रति विशेषण है। सम्बोधनार्थ का क्रिया में अन्वयबोध होता है, यथा—

सम्बोधनपदं यच्च तत् क्रियायां विशेषणम् ।
वजानि देवदत्तेति निघातोऽभ तथा सति ॥

तथा सिद्ध वस्तु ही जहाँ उपस्थित रहती है वहाँ ही प्रथमा होती है। बाल्यावस्था में 'राजन् ! भवयुध्यस्व' (तुम राजा हो जाओ और युद्ध करो) इस प्रकार के वाक्य में सम्बोध्य राजत्व रूपार्थ प्रथमतः सिद्ध नहीं है, अतः यहाँ सम्बोधन विभक्ति नहीं होती है। तथा हे देवदत्त ! "मेरे गमन का काल प्राप्त हुआ।" यहाँ सम्बोधन हुआ है।

**प्रश्न 2 कारक किसे कहते हैं ? सम्बन्ध को कारक क्यों नहीं माना गया ? सप्रमाण विवेचन कीजिए।**

3. कारके च ॥ 1/3/23 ॥

इत्यधिकृत्य ।

**सूत्र-व्याख्या**—कर्तृ कर्मादि व्यपदेश में निमित्त को कारक कहते हैं।—'करोति कर्तृकर्मादिव्यपदेशान् इति कारकम्।' क्रियान्वित्वम् कारकत्वम्—अर्थात् क्रियाजनक एवं क्रिया में साक्षात् अन्वत्री को कारक कहते हैं। 'राज्ञः पुरुषः' इसी षष्ठीयुक्त वाक्य में कारक की परिभाषा का समन्वय न होने से षष्ठी कारक विभक्ति नहीं है। अतः कर्ता, कर्म, करण, सम्प्रदान, अपादान एवं अधिकरण ये ही कारक माने गये हैं।

**प्रश्न 3. कर्तुरीप्सिततम सूत्र की व्याख्या निम्न तथ्यों के विवेचन सहित कीजिए—**

**(क) माषेष्वश्वं बध्नाति—यहाँ माष में द्वितीया क्यों नहीं होती ?**

**(ख) सूत्र में तमप् ग्रहण के प्रयोजन का विवेचन कीजिये।**

**(ग) अभिधानं त प्रायेण तिङ् कृत् तद्धित् समासैः—इसकी सोदाहरण व्याख्या करें तथा इसमें प्रायेण पदोपात्तन का रहस्य समझावें।**

**द्वितीया-विभक्ति विवेचनम्—**

4. कर्तुरीप्सिततमं कर्म ॥1/4/49॥

कर्तुः क्रियाया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात्।

कर्तुः किम्—माषेष्वश्वं बध्नाति, कर्मण ईप्सिता माषा न कर्तुः । तमप्ग्रहणं किम् ?—पयसा आदेनं भुङ्क्ते । कर्मेत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । अन्यथा गेहं प्रविशत्यभैव स्यात् ॥

**सूत्र-व्याख्या**—कर्ता में रहने वाले जिस प्रकृत-धात्वर्थ व्यापार से उत्पन्न फल का, जो फलतावच्छेदक सम्बन्ध से आश्रय है उस से सम्बन्ध करने के लिये जो अत्यन्त इष्ट है, उसकी कारक संज्ञापूर्वक कर्मसंज्ञा होती है । फल एवं व्यापार रूप से धातु के दो अर्थ हैं । व्यापार का जनक कर्ता आदि हैं, व्यापार जन्य है एवं जनक भी है तथा फल जन्य है जो व्यापार से उत्पन्न होता है । व्यापार का अनाश्रय होते हुये जो फलाश्रय है उसकी कर्म संज्ञा होती है । अन्य कारक से अनधीन व्यापाराश्रय की कतृसंज्ञा होती है । यथा—

'चैत्रो ग्रामं गच्छति' इस वाक्य में गम् धात्वर्थ व्यापाराश्रय चैत्र है । चैत्रनिष्ठ क्रिया जन्य फल संयोग है, संयोगाश्रयत्व से अतिशय सम्बन्ध करने को इष्ट ग्राम है, अतः उसकी कारक संज्ञा होकर कर्म संज्ञा हुई तथा कर्मवाचक प्रातिपदिक से द्वितीया होकर 'चैत्रो ग्रामं गच्छति' व्यापार का अनधिकरण संयोगाश्रय चैत्र नहीं, किन्तु ग्राम होने से ग्राम में द्वितीया हुई ।

सूत्र में कर्ता की क्रिया से अत्यन्त इष्ट पदार्थ की ही कर्म संज्ञा करना अभिप्रेत है, क्योंकि (कर्तुः) ग्रहण न करने पर 'माषेषु अश्वं बध्नाति' इसमें अश्वनिष्ठ भक्षण क्रिया जन्य फलाश्रय रूप से सम्बन्ध करने को इष्ट माषों की भी कर्म संज्ञा होकर 'माषान् अश्वं बध्नाति' यह होने लगेगा । कर्तुः ग्रहण करने पर यहाँ बन्धन क्रिया कर्ता क्षेत्र का स्वामी है । उसमें रहने वाली क्रिया बन्धन है, उसका फलाश्रय अश्व है, उसकी ही कर्म संज्ञा हुई है । अश्व तो यहाँ कर्म है उसको माषभक्षण इष्ट है । "कर्मणः ईप्सिता भाषा न कर्तुः" इससे यही सूचित किया है ।

"तमम् ग्रहणं किम् ?"—सूत्र में तमम्ग्रहण क्यों किया है ? इसका आशय यह है कि 'कर्तुरुद्देश्यं कर्म' के साथ पर ईप्सित और तमप् दोनों की ही आवश्यकता है । जहाँ कर्ता भोजन कर चुका था किन्तु उसको भाजनार्थ पुनः प्रवृत्त करने के लिए पयोलाभ का लालच यदि कोई देता है वहाँ 'पयसा ओदनं भुङ्क्ते' यही भोजन कर्ता का उद्देश्य भूतपय होने से वहाँ उस (पय) की कर्म संज्ञा नहीं होती एतदर्थ 'ईप्सित' ग्रहण किया है । फलाश्रयत्व से सम्बन्ध को ओदन ही इष्ट है, पय नहीं तमप् ग्रहण न करने पर 'वारणार्थानाम् ईप्सितः' एवं सूत्र का एक समान विषय होगा, ऐसी परिस्थिति में 'अग्नेर्माणवकं वारयति' यहाँ अग्नि की कर्म संज्ञा होगी, यदि अपादान संज्ञा–विशेष से इसका बाध होगा तो माणवक की भी अपादान संज्ञा कर 'अग्नेर्माणवकात् वारयति' यह अनिष्ट रूप आपत्ति होगी । अतः तमप् करने पर अतिशय इष्ट की कर्म संज्ञा तथा केवल इष्ट की अपादान संज्ञा यह विषय-विभाग निर्दोष सिद्ध हुआ । यहाँ फल पद से धातु वाच्य फल गृहीत हुआ, अन्य नहीं ।

'अधिशीङ्' सूत्र से कर्म की अनुवृत्ति यहाँ आती है तो पुनः कर्म ग्रहण क्यों किया ? वहाँ से कर्म आधार—संयुक्त आता तो आधारभूत, की कर्म संज्ञा होती—'गेहं प्रविशति', वह गेह प्रवेशन क्रिया जन्य संयोग का आधार है। किन्तु हरिं भजति, पुस्तकं चैत्रः पठति, वहाँ हरि एवं पुस्तक आधार-भूत कर्म न होने से उनकी कर्म संज्ञा न होगी। अतः आधारभूत अनाधार भूत फलाश्रय की कर्म संज्ञार्थ कर्मग्रहण सार्थक है।

**प्रश्न 4. अभिधानन्तु प्रायेण तिङ्कृत्तद्धितसमासैः। इस मूल पंक्ति की व्याख्या सोदाहरण कीजिये। 'यहाँ आयेगा' पदोपक्षय का स्वरूप भी समझावें।**

5. अनभिहिते ॥2/3/1॥

इत्यधिकृत्य ।

**सूत्र-व्याख्या**—यह अधिकार सूत्र है, विभक्ति-विधायक अग्रिम सूत्रों में इसकी अनुवृत्ति होती है। अभिहितक कथित को कहते हैं। अन्नभिहित=अनुक्त या अकथित समानार्थक हैं।

6. कर्मणि द्वितीया ॥2।3।2

अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति। अभिहितेतु कर्मणि 'प्रातिपदिकार्थमात्रे' इति प्रथमैव। अभिधानन्तु प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्-हरिः सेव्यते। कृत्-लक्ष्म्या सेवितः। तद्धितः-शतेन क्रीतः शत्यः। समासः—प्राप्त आनन्दो यं स प्राप्तानन्दः। क्वचिन्निपातेनाभिधानम्, यथा-विष वृक्षोऽपि संवर्ध्य स्वयं छेतुमसाम्प्रतम्। साम्प्रतमित्यस्य हि युज्यत इत्यर्थः।

**सूत्र-व्याख्या**—अनुक्त कर्म-संज्ञा वाचक शब्द से द्वितीया विभक्ति उत्पन्न होती है। यथा–भक्त हरि की सेवा करता है—भक्तो हरिं भजति, यहाँ भक्तनिष्ठ व्यापार से उत्पन्न प्रीति रूप फलाश्रय हरिकी कर्म संज्ञा है, तद्वाचक 'हरि' शब्द से द्वितीया विभक्ति हुई है। कर्तृ-कर्मादि संज्ञायें अर्थ की होती हैं, उसका वाचक केवल शब्द है, उसी प्रकार कारक संज्ञा भी अर्थ की है शब्द वाचक है। (अर्थस्येयं संज्ञा न शब्दस्य)। जहाँ कर्मादि का अभिधान रहे वहाँ प्रथमा विभक्ति ही होगी। प्रायः यह अभिधान तिङ्, कृत्, तद्धित एवं समास से होता है। नीचे एक-एक उदाहरण ज्ञानार्थ दिया जा रहा है, यथा—

(1) तिङ्—'हरिः सेव्यते' (चैत्रेण)—यह कर्माणि प्रयोग है। यहाँ लट्लकार कर्म में है। जिस अर्थ में जो होता है, उसका वह अर्थ है। लकार का कर्म रूप अर्थ है, उसके स्थान में जायमान 'त' प्रत्यय का भी कर्म अर्थ है, स्थानी के अर्थ बोधन करने में समर्थ हो वही आदेश होता है। हरि रूप कर्म 'त' प्रत्यय से उक्त है, अतः हरि से प्रथमा, यहाँ कर्ता अनुक्त है अतः कर्तृवाचक से तृतीया (चैत्रेण) हुई है।

(2) कृत्—'लक्ष्म्या सेवितो हरिः' यहाँ लक्ष्मी कर्त्री है उनुक्त होने से उससे तृतीया, सेवितः में कृत्यत्यय क्त कर्म में विहित है उससे हरि रूप कर्म उक्त है, अतः कर्मवाचक से प्रथमा।

(3) **तद्धित**—'शतेन क्रीतः शत्यः' यहाँ क्रयण (खरीद) करने में शत प्रकृष्ट उपकारक है, वह करण है अतः 'शतेन' में करण में तृतीया है, तद्धित प्रत्यय यत् कर्मार्थक है, उससे क्रयण कर्म अश्वादि उक्त है, अतः प्रथमा हुई है 'क्रीतम अश्वम्' नहीं हुआ।

(4) **समास**—'प्राप्तः आनन्दो यं सः' यहाँ प्राप्ति कर्म आनन्द समास से उक्त है, अतः वहाँ प्रथमा ही हुई है 'प्राप्तम्-आनन्दम्' न हुआ।

(5) 'विषवृक्षोऽपि' यहाँ 'संवर्धन'-क्रिया कर्म-विषवृक्ष से द्वितीया प्राप्त थी जो 'विषवृक्षम्' होना चाहिये किन्तु 'अपि' निपात अनेकार्थक है, उससे यहाँ कर्मरूप अर्थ उक्त है, अतः प्रथमा विभक्ति हुई है। विषवृक्ष का पौधा लगाकर वह वृक्षाकार प्रवृद्ध हुआ। उसका स्वयं काटना अनुचित है, "वह राक्षस हमसे ही वरदान प्राप्त कर वृद्धिगत हुआ उसका मैं कैसे नाश करूँ, यह तो सर्वथा अनुचित है" यह शङ्करोक्ति तारकासुर के सम्बन्ध में देवगण समक्ष पुरा कही गई थी। इसी प्रकार "क्रमादमुं नारद इत्यबोधिसः" इस प्रकार की गुजरात प्रान्त के महाकवि माघ की कृति में ज्ञानाश्रय नारद की कर्म संज्ञा न हुई 'इति' निपात् से कर्म-अर्थ उक्त है।

**प्रश्न 5. अभीप्सित कितने प्रकार का होता है, यह समझाते हुए सूत्र की व्याख्या करें।**

7. तथायुक्तं चानीप्सितम् ।।1/4/50।।

ईप्सिततमवदनीप्सितमपि कारकं कर्मसंज्ञं स्यात्। ग्रामं गच्छन् तृणं स्पृशति। ओदनं भुञ्जानो विषं भुङ्क्ते।

**सूत्र-व्याख्या**—ईप्सिततम के समान क्रियायुक्त अनीप्सित कारक की भी कर्म संज्ञा होती है। यथा 'गाँव को जाता हुआ मार्गस्थ तृण का स्पर्श करता है।' यहाँ तृण-स्पर्श ईप्सित नहीं है किन्तु मध्यमार्ग स्थित होने से उसका स्पर्श अनिच्छया भी हो जाता है, यथा—'ग्रामं गच्छन् तृणं स्पृशति।' शत्रु के घर में धोखे से भात खाते समय विष भी खालेता है, यह विष ईप्सित नहीं है तो भी कर्म संज्ञा हुई है, यथा—'ओदनं भुञ्जानो विषं भुङ्क्ते।' जहाँ असाध्य रोग से पीड़ित व्यक्ति मरण को ही अपना श्रेयः साधन मानकर इच्छा से विष-पान करता है, वहाँ तो 'विषं भुङ्क्ते' में विष ईप्सियततम ही है, अतः वहाँ द्वितीया हुई है।

**प्रश्न 6. द्विकर्मक धातुओं का परिगणन प्रयोजन समझते हुये अकथितञ्च सूत्र का विषय स्पष्ट करें।**

8. अकथितञ्च ।।1।4।51।।

अपादानादिविशेषैरविवक्षितं कारकं कमसंज्ञं स्यात्।

"दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्याद कथितं तथा स्यान्नीहृक्कृषवहाम् ।"

दुहादीनां द्वादशानां नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्मेति परिगणनं कर्तव्य-मित्यर्थः। गांदोग्धि पयः। बलिं याचते वसुधाम्। अविनीतं विनयं

याचते । तण्डुलान् ओदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षरिनिधिं मघ्नाति । देवदत्तं शतं मुष्णाति । ग्राम-मजां नयति, हरति, कर्षति, वहति वा ।

अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् माणवकं । धर्मं भाषते । अभिधत्ते वक्ति इत्यादि । कारकं किम् ? माणकस्य पितरं पन्थानं पृच्छति ।

अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽश्वाच कर्मसंज्ञक इति वाच्यम् ।" कुरून् स्वपिति । मासमास्ते गोदोहमास्ते । क्रोशमास्ते ।

**सूत्र-व्याख्या**—अपादान आदि विशेष से अविवक्षित कारक की कर्म संज्ञा होती है । उन संज्ञाओं की विवक्षा जहाँ न रहे उसके 'अकथित' कहते हैं । कर्ता में लकार करने पर कर्म अनुक्त हो जाने से उस कर्म को भी अकथित कहते हैं, उस से द्वितीया विभक्ति होती है । अकथित कर्म प्रदर्शनार्थ यह कारिका प्रस्तुत की गई है—'दुह्याच्' ।

कारिका में उल्लिखित 16 धातुओं की वाच्य क्रियाओं से उत्पन्न फलों के आश्र भूत अर्थों की कर्म संज्ञा तो 'कर्तु रीप्सिततमम्' व रेगा । वह कर्म इन धातु वाच्य व्यापारों का प्रधान कर्म कहलाता है, उन प्रधान कर्मों से योग रखने वाला अपादानादि विशेष से अविवक्षित कारक की कर्मसंज्ञा इससे होती है, (अतः) यह गौण–(अप्रधान) कर्म कहा जाता है । किस कर्म में किससे लकार हो उस समय 'गौणे कर्मणि' से ज्ञात होता है, यथा 'गोदुह्यते' पयः' 'अजा ग्रामं नीयते' ।

(1) 'गाय से दूध दोहता है'—यहाँ अलगाव में पञ्चमी अपादान से होनी चाहिए थी किन्तु कारकविवक्षाधीन है अतः अपादान त्वेन गौ की विवक्षा नहीं की, इससे कर्मसंज्ञा—'गां दोग्धिणयः ।' हुई ।

(2) 'बलिराज से पृथ्वी माँगता है',—यहाँ वसुधा कर्म से सम्बद्ध बलि का अपादानत्वेन अविवक्षा है, अतः कर्म संज्ञा से द्वितीया 'बलिं याचते वसुधाम्' बना ।

(3) 'अविनीत से विनय की याचना करता है'—यहाँ अविनीत की अपादानत्वेन अविवक्षा है, इससे कर्मसंज्ञा हुई—'अविनीतं विनयं याचते ।'

(4) 'चावल से भात पकाता है'—यहाँ तण्डुल की इससे कर्म संज्ञा हो गई—'तण्डुलान् ओदनं पचति ।'

(5) 'गर्गों से सौ रुपये दण्ड रूप में ग्रहण करता है'—यहाँ गर्ग की अपादानत्वेन अविवक्षा होने से इससे कर्म संज्ञा कर—'गर्गान् शतं दण्डयति' बना । वास्तव में महान् पूज्य गर्ग अदण्ड्य है किन्तु वैदुष्य प्रयुक्त वैमनस्य के कारण यह उक्ति एवं गर्ग शतदण्डनन्याय है ।

(6) 'व्रज में गाय को रोकता है'—यहाँ व्रज वास्तव में अधिकरण रहा है किन्तु अधिकरणत्वेन विवक्षा न करने से इस सूत्र से कर्म संज्ञा होकर 'व्रजं गाम् अवरुणद्धि' बना ।

(7) 'बालक से मार्ग पूछता है'—यहाँ बालक की कर्म संज्ञा–'माणवकं पन्थानं पृच्छति' हुई है।

(8) 'वृक्ष से फलों को बटोरता है'—यहाँ वृक्ष की अपादान-संज्ञा की विवक्षा न होने से कर्म संज्ञा से–'वृक्षम् अवचिनोति फलानि' यह बना।

(9) 'बालक के लिए धर्म देता है या उपदेश करता है' यहाँ दानार्थ धातु है लेकिन बालक की सम्प्रदानत्व की अविवक्षा एवं कर्मत्वेन से विवक्षा होने से द्वितीया- 'माणवकं धर्म ब्रूते शास्ति इति वा' बना।

(10) 'देवदत्त को जीतकर उससे सौ रुपये लेता है' यहाँ देवदत्त की अपादानत्वेन अविवक्षा से कर्मसंज्ञा से 'शतं जयति देवदत्तम्।' बना।

(11) 'सुधा (अमृत) के लिए समुद्र का मन्थन करता है'—यहाँ सम्प्रदानत्वेन सुधा की अविवक्षा से कर्म संज्ञा से 'सुधां क्षीरनिधिं मध्नाति' बना।

(12) 'देवदत्त को ठगकर सौ रुपये ग्रहण करता है'—यहाँ देवदत्त की अपादानत्व से अविवक्षा है इससे कर्म संज्ञा में—'देवदत्तं शतं मुष्णाति' बना।

(13, 14, 15, 16)—'गाँव से बकरी को ले जाता है,' 'गाँव से बकरी का अपहरण करता है, या कर्षण करता है, या गाँव से हरण करता है'—यहाँ सर्वत्र अधिकरणत्वेन अविवक्षा तथा कर्मत्वेन विवक्षा होने से अजां ग्रामं नयति, हरति आदि।

पूर्वोक्त 16 धातुओं के समानार्थक (पर्यायवाचक) धातुओं के योग में भी अकथितञ्च सूत्र विहित कर्मसंज्ञा होती है। यथातद्राजस्य ॥2/4/62॥ इस सूत्र भाष्य में पृच्छधातु के पर्याय चुद् धातु को द्विकर्मक कहा गया है—'योहि उभयोर्दोषो न तत्रैकश्चोद्यो भवति' इस प्रसंग को लेकर 'अचोद्यं मां त्वं चोदयसि अहमपि त्वां किमचोद्यं चोदयामि।' यहाँ चुद् धात्वर्थ पृच्छार्थक है, इससे याच् समानार्थकभिक्ष, ब्रू समानार्थक भाष, अभिपूर्वकवच्, इनके योग में भी इससे कर्मसंज्ञा हुई है। 'माणवकस्य' यहाँ षष्ठी कारक विभक्ति नहीं है।

अकर्मक धातुओं के योग में देश, काल, क्रिया एवं गमन करने के योग्य मार्ग की कर्म संज्ञा होती है, यथा—

(1) 'कुरून् स्वपिति'—यहाँ 'स्वप्' धातु शयनार्थक अकर्मक है। उसके योग में देश–(कुरु नामक देश) की कर्मसंज्ञा हुई है एवं कर्मवाचक शब्द से द्वितीया विभक्ति से कुरून्'। काल में 'मासमास्ते' यहाँ मास की कर्मसंज्ञा, आस् धातु अकर्मक है। भाव के उदाहरण में 'गोदोहमास्ते' यहाँ गोदोहन क्रिया से स्थिति क्रिया का काल ज्ञान है। अध्वा में 'क्रोशमास्ते' यहाँ क्रोश रूप मार्ग की कर्म संज्ञा हुई है।

**प्रश्न 7. "गतिबुद्धि प्रत्यव समानार्थ शब्द कर्माकर्मणाम् अणि कर्ता स णौ" इस सूत्र की सपदकृत्य व्याख्या करें।**

9. गति बुद्धि प्रत्यवसानार्थ शब्द कर्माकर्मणाम् अणि कर्ता स णौ ॥1।4।52॥
गत्याद्यर्थानां शब्द कर्मकाणाम् अकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात्।

